# गुहावासी

प्रणेता

सत्यप्रकाशसिंहः
अलीगढ़ मुस्लिम विश्वविद्यालये
संस्कृतविभागाचार्यः कलासङ्कायाध्यक्षश्च

मेहरचन्द लक्ष्मणदास प्रकाशनम्
नयी दिल्ली

# पुरोवाक्

अस्त्युपन्यासोऽयं नितरामभिनवकथाश्रितः। कथा चेयमस्ति यथार्थबहुला। यथार्थेषु चरित्रेषु तत्प्रायोघटनासु च किञ्चिन्मात्रपरिवर्तनपरिमार्जनपूर्वकमस्त्येषोपकल्पिता। याथार्थ्याश्रितकल्पनाव्यापारोऽयमध्यात्मतत्त्वस्य गाम्भीर्यपरिमेयशक्तिमत्त्वनिदर्शकोऽस्ति सञ्जातः। एतद्रहस्यानभिज्ञो मानवः सम्प्रति भौतिकसमृद्धिशिखरारूढोऽपि सन् नानाविधासन्तोषग्रस्तोऽस्ति। तदभिज्ञस्तु नितरां क्लिष्टजीवननिधिरपि दृश्यत आनन्दाप्लावितः सन्मार्गारूढो मानवमात्रकल्याणनिरतो भाविविकासाग्रदूतकल्पश्च। अथैतद्रहस्योन्मीलन एव सम्भाव्यते मानवताया आत्यन्तिकं कल्याणम्, न तु भौतिकसौख्यनैमित्तिकनिरतिशयसञ्चयबहुले जीवनक्रमे। भौतिकविज्ञानजन्यचाकचक्याभिभूतेऽपि युग एतस्मिन्ननुभूतिरेषाभिव्यनक्त्यात्मानं यत्र तत्र। तथ्यमेतत् कथाकारतां लभते रचनायामत्र।

विकीर्णघटनाचक्रसंयोजनोपायरूपेण सविशेषं विनियुक्तोऽस्त्यत्र स्वप्नः। स्वप्नो नाम प्राकट्यतिरोभावशीले प्राणिचैतन्ये सातत्यं विदधाति। जाग्रतचैतन्याभिलाषपूरकोऽप्ययम्। एवमेव कलाप्यस्ति भाविताभावपूर्तिसाधनभूता। अभावानुभूतिनिरसनपूर्वकं पूर्णत्वलाभाय यावत् स्वप्नोऽस्ति तात्कालिको वैयक्तिकश्चोपायः तावत् कलास्ति चिरस्थायिनी सार्वजनीना च। कलया सहैतस्यैतदेव तारतम्यं मनसि निधाय स्वप्नव्यापारोऽस्त्यत्र पुष्कलमात्रायां विनियुक्तः। जीवनक्रमे यथा स्वप्नो जाग्रतकालीनानुभूत्या सह विवर्ततेऽनुक्रमेण, प्रायस्तद्वदेव स्वप्नानुभूतिरस्त्यत्र विनियोजिता कथाप्रसारप्रक्रियायाम्। अनया रीत्या संयोजिता कथेयं जीवनसत्यं स्फुटतरमनायासं च व्यञ्जिष्यतीत्याशंसे।

रचनायामेतस्यां प्रतीकानामप्यस्ति प्रयोगः पुष्कलः। प्रतीकोन्मीलनसूत्राण्यपि सन्ति निर्दिष्टानि स्थाने स्थाने। तत्परामर्शेन निहितार्थावबोधः सुकरः स्यात्। एवं स्थूलकथाया अभ्यन्तरतः सूक्ष्मार्थान्वीक्षकाः सविशेषं सन्ति प्रणत्यर्हा लेखकस्यैतस्य।

संस्कृतसाहित्यमन्दाकिन्याः कालक्रमेण निर्बाधप्रवाहायापेक्ष्यते यथाकालं यथारुचि चैतस्यां नानाविधमभिनवं रचनाविधानं यथा खलु तत्तद्युगीनाः समस्याः स्युरेतस्यां प्रतिफलिताः समाधानोन्मुखीकृताश्च । अनयैव रीत्या शक्नोत्येषा दैवीवाक् प्राचीनतमापि सती अद्यतनभाषाभिः सहाविचलगत्याऽग्रेसर्तुं स्वकीयमक्षय्यत्वं चिरन्तनसातत्यं च निर्वोढुम् । साहित्यसाधनायज्ञे एतस्मिन् हुताऽऽहुतिरेषा मनागपि मनःप्रसादं जनयति चेत् तर्हि धन्यात्मानं मन्यते प्रणेतायम् ।

२०४८ तमे विक्रमसंवत्सरे
वसन्तपञ्चम्याम्
अलीगढ़नगरे

सत्यप्रकाशसिंह

# समर्पणम्

मानवताया गतिरोधनिवारणाय

# गुहावासी

ततः किञ्चिद्दूरमपसृत्य बदरिकाश्रममार्गस्य दक्षिणेन वृक्षच्छायायां पञ्चषड्जना इतस्ततो विकीर्णेषु पाषाणखण्डेष्ववतिष्ठन्ति। मृन्मयनाडिकाद्वारेणान्यतमस्तेषां धूमं पिबति। नाडिका तावदनुक्रमेण परिवर्तते हस्ताद् हस्तान्तरम्। अभितिष्ठन्त्येनां मण्डलीं केचिज्जनाः कौतुकवशात्। उपविष्टेषु जनेष्वस्त्येको युवकोऽर्धकर्तितकेशः, अधोवस्त्रमात्रपरिच्छदः, अत्यन्तगौराङ्गश्च। अनुक्रमेण परिवर्तमाना धूमनाडिकाऽऽपाततः पतति तस्यैव यूनो हस्ते। आदाय तामेतावता वेगेन धूमं पिबत्यसौ यथा नाडिकाहितोऽग्निरुच्छिखः प्रज्वलत्यसौ च रक्ततराक्षः संवर्तते।

उपशान्ते नाडिकाग्नौ विसर्जितायां च साधुसंसदि जातकुतूहलेन पृष्टो मयाऽसौ युवा 'देशं कमलङ्करोति भवान् स्वजन्मना, कथं च प्राप्तोऽस्त्युद्देशमिमं हिमालयीयमि'ति।

'श्रीमन्, डेनमार्कदेशीयोऽहमि'ति प्रतिवदत्यसौ धृतगाम्भीर्यः। प्रारम्भिकीं शिक्षां परिसमाप्य स्वदेश एव मया दुग्धव्यवसायः प्रारब्धः। व्यवसायेनानेनोपार्जितकिमपिद्रव्योऽहं निर्गतोऽस्मि सम्प्रति भ्रमणार्थम्। सुचिरं देशाद्देशान्तरं परिभ्रमन् कतिपयवर्षपूर्वं भारतभुवं प्राप्तोऽस्मि। सम्प्रति ऋषिकेशे एवोपकल्पितवासोऽस्मि संवृत्तः।'

'कुत्र कृतवासो भवानत्र ?' इति मया पृष्टोऽसौ किञ्चिद् विलम्ब्येतस्ततश्चावलोक्य शनकैः प्रतिवदति—'श्रीमन्! गङ्गायाः कूलान्तरे शङ्कराचार्यनगरस्य परिपार्श्वे गुहायामेकस्यामुपकल्पितवासोऽस्म्यहम्।

'गुहायां निवसति भवान् ? विचित्रं खल्वेतत्! कथं खलु जीवनव्यापारः प्रसरति तत्र ?'

'आम्, गुहायां निवसामि। जीवनोपयोगीनि वस्तूनि क्रेतुं यथाकालमृषिकेशं गच्छामी'ति वदन्नेवासौ पार्श्वस्थां पोट्टलिकां निर्दिशति।

'विचित्रोऽयं जनः। पाश्चात्यदेशीयोऽपि सन् गुहायां निवसत्येषः। कियत्कष्टजीवनः, कियन्निर्भीकः!' जातकुतूहलेन मया पुनरप्युच्यते—'किमेकाक्येव निवसति भवांस्तत्र।' एवं पृष्टोऽसौ सस्मितं प्रतिवदति—'अभ्यागतः कश्चित् सुहृदपि यदा कदा तत्रैव निवसति।'

'अथ किमर्थं भवतोऽक्षिणी एतावन्मात्रं लोहिते सञ्जाते ? अपि धूमपानात् ?' चक्षुषी उद्दिश्य पृष्टोऽसौ प्रतिवदति—"नैवं खलु। पश्यतु भवान्। प्रत्यहं गङ्गायां स्नाम्यहम्। एतदर्थं भवेतामेते किञ्चिद् रक्ताभे।'

'प्रशंसनीयं खलु भवदीयं साहसम्। अप्येतस्मिन् वर्षाकाले भवान् गङ्गायां स्नाति यदा जलधारा एतावतीं वृद्धिं प्राप्ता ?

'का हानिः ? अहं तु तरणकुशलोऽस्मि। इदानीमपि तीर्त्वा नदीमिमां पारयितुं शक्नोमि। दिवसेष्वेतेषु जलधारास्तावद् भृशं सिकतासम्मिश्रिताः। मन्ये तत्प्रवेशादेव ममाक्षिणी रक्तवर्णे संजाते।'

'क्लिष्टजीवी भवानत्र संवृत्तः। मन्ये, स्वदेशे भवदीयं जीवनं सुतरां सुख-मयमभवत्।'

"अलमेवं चिन्तयित्वा। मया त्वेतस्मादपि क्लिष्टतरं जीवितं यापितम्। स्वदेशे मया पर्वता आरूढाः, सरितः तीर्णाः, वनानि विचरितानि, वन्यपशुभिश्च क्रीडितम्। एतस्मिन् हिमवत्प्रदेशेऽप्यागङ्गोत्रि गतोऽस्मि।'

एवं संलपतोरावयोर्दिवसः परिणतः। घर्मो निस्तेजस्कः सञ्जातः। सूर्यबिम्बः प्रतीचीनां पर्वतराजिं अस्प्राक्षीत्। सायन्तनी छाया चोपत्यकायां प्रासरत्। गङ्गागह्वरेषु सा कृष्णतरत्वं भेजे। परन्त्वोन्नतप्रदेशाः सम्प्रत्यपि रजतपत्रमिवादीप्यन्त। यावदेकत आकाशमार्गेणोड्डीयमाना घर्मदीप्ताः पक्षिणः पर्वतशृङ्गोन्मुखमुदपतन् तावदन्यतो वानरशृगालशूकरप्रभृतयः पशवोऽध-स्थितेषु कृष्णायमानेषूपत्यकागह्वरेषु प्रविशन्तोऽलक्ष्यन्त। अथावाभ्यामपि स्वं स्वमावासं प्रति निवर्तितव्यमिति मनसि निश्चित्य नीरूपेण पोट्टलिकामादाय स्कन्धे चारोप्य लक्ष्मणदोलोन्मुखं प्रचलितम्।

गते तस्मिन्नेकाकिना मया गङ्गाकूलोपजातोपत्यकागह्वरमभिलक्ष्य भूयोऽपि दृष्टिः प्रसारिता। तमस्तत्र निबिडतरं जातम्। गङ्गाप्रवाहध्वनिरुच्चतरत्वं भेजे। परस्परावघट्टितस्कन्धा वनस्पतयोऽन्योन्यस्योपर्यट्टहासं चक्रुरिव। कूलान्तरस्था विद्युत्प्रदीपाः दीपावलिमहोत्सवारम्भमिव चक्रुः। ततः परमवस्थितो नगराजः तमसाच्छन्नोऽभवत्। तत्रावस्थितगुहाप्रविष्टो नीरूप आत्मनोऽरूपत्वं चरितार्थयेन्ना-मेति विविधं चिन्तयता, उच्चैरुच्चैरारोहता च मया कथञ्चिदाश्रमः सम्प्राप्तः। तत्र भोजनान्तरेऽध्ययनायात्माऽऽयासितः। परन्तु पर्यटनश्रमातिरेकाच्छीघ्रमेव निद्रयापहृतोऽभवम।

   

पृष्ठारोपितपोट्टलिकोऽसावेव नीरूपो मन्दं मन्दं गच्छन् गुहायां प्रविशति मां च तत्रैवाकारयति। गुहा त्वस्ति निबिडान्धकाराच्छन्ना। गौराङ्गोऽपि नीरूपः

सम्प्रति तिमिरातिरेकात् कथञ्चिदालोक्यते । केवलं यदा कदा परिवृत्ताननस्य तस्य सस्मिता दन्तपंक्तिरचिरोद्भासितं विद्युद्विलासं वितनोति । सहसैव 'हरिः ओ३म्' इति नितरां श्रुतिमधुरो ध्वनिःश्रूयते नातिदूरात् । यावदग्रतोऽवलोकयामि तावन्मन्दे दीपप्रकाशे ईषत्पीतवर्णमुत्फुल्लारविन्दचक्षुष्कं रक्ताधरोष्ठं विकीर्ण-काञ्चनाभालकं पुनरपि 'हरिः ओ३म्' इति पदमुच्चारयन्तं सुकुमारं सुमनोहरं मुखमण्डलमेकं पश्यामि । झटित्युत्थाय स्मेरानना युवतिरेका सविस्मयमवलोक-यन्त्यभिवादयन्ती च मां गुहैकदेशे निषीदितुमागृह्णाति । अत्रान्तरे दीपः कदा निर्वृतिमापन्न इति नावगतम् । अथ दीपमन्तरापि गुहा प्रकाशितेवाभाति । गुहायां सन्ति निहितानि क्वचित् कानिचित् पुस्तकानि, क्वचित् पनीरपूर्णं पात्रम्, क्वचिच्च काश्चित् करपट्टिकाः । अपनीतश्रमो नीरूपो लज्जावसनां युवतिमाकार्य 'अत्रभवते पनीरखण्डमेकं देही'ति निर्दिशति । ससाधुवादं गृहीत्वाऽऽस्वाद्य च मया तत्परिचयः पृच्छ्यते । उल्लसिताननो नीरूपः प्रतिवदति—

'श्रीमन् ! एषैव तन्मित्रं यया सार्धमहं काले काले स्वकीयमद्वैतत्वमप-नुदामि । एतस्याः साहचर्यबलेनैवास्मि सक्षमोऽत्रनिवासाय । अवाप्ततत्सङ्गमोऽहम-शेषमपि जगद् विस्मारयितुं क्षमोऽस्मी'ति तद्वृत्तान्तमाचक्षाणोऽसौ भावविह्वलो भवति । कथञ्चिदात्मानं संयम्य पुनरपि वक्तुं प्रारभते—

'एषा तावन्मद्देशीयैव । पित्रोरनन्यसन्ततिरेषा । पितरौ तु गोपालकौ स्तः, दुग्धव्यवसायेनार्जितप्रभूतविभवौ । न चास्या मनोऽध्ययनेऽनुरज्यते स्म न वा भौतिके सुखे । निर्विण्णैषा देशाद्देशान्तरं गन्तुं मनोऽकरोत् । अथ कदाचित् साश्रुनयनौ पितरौ परिष्वज्यैषा गृहान्निर्गता । देशाद्देशान्तरं परिभ्रमन्त्ये-षाऽऽपाततो भारतं प्राप्ता । पञ्चवर्षाण्यतिगतान्येनां नगरीं सम्प्राप्ताया एतस्याः । परं गणनापरम्परयैव वक्तुं शक्यत एतत् । संपिण्डितं वर्षपञ्चकं तु मां दिवसमा-त्रमिव प्रतिभाति । स्वदेशं निवर्तितुं पितरौ च द्रष्टुमेषा सम्प्रति मनोऽपि न करोति । केवलं मातुः पत्रे समागते सति कांश्चिदश्रुबिन्दून् विमोचयत्येषा । इदानीं तु निर्जनगुहावासैकमात्रसहायिका ममाराध्यदेवी खल्वेषा ।'

यावन्नीरूप एवं वदति तावद् गुहामुखात् 'कः कोऽस्ती'ति शब्दः श्रूयते । ससम्भ्रमं धावति तदुन्मुखी युवतिः, हस्तारोपितपत्रा च निवर्तते । 'मातुः पत्रं समागतमि' त्युद्घाट्य सोल्लासं पठति—

'प्रिये दोरोथि ! बहुकालान्नाधिगतं तव पत्रम् । उपचीयते चिन्ता मम मनस्यनुदिनं कीदृशीमवस्थां गता स्यान्मम पुत्रिकेति ।

पुत्रिके ! यदा प्रभृत्यावां विसृज्य गतासि तदाप्रभृत्येव त्वत्पितृचरणस्य मनः क्वापि न रमते। मुहुर्मुहुरसौ त्वामेवाकारयति। नितरामपचितं तद्गात्रं त्वद्गतचिन्तया। न जाने विधाता किं चिकीर्षति। मेरी-टामी-प्रभृतित्वत्सख्यः पुनः पुनः पृच्छन्ति 'कदा दोरोथ्यागन्ते'ति। किमुत्तरयाणि? आत्मोदन्तमपि न प्रेषयसि, आगमनस्य तु कथैव का। कुत्र निवससि, कस्य साहचर्ये, कथं ते भोजनोपलब्धिरिति तु वयं न जानीमो यत्सत्यम्। केवलं पत्रोद्देशादनुमीयते सम्प्रति हिमवत उपत्यकायां निवससि क्वचिदिति। वासस्थानं तु भयावहं स्यात्। सिंहश्वापदसर्पैराकुलं दुर्गमं भारतं नाम। श्रूयते हि भुजङ्गमास्तत्र नगरचतुष्पथेष्वपि दृश्यन्ते, हस्तिनश्च ग्रामेष्वाक्रमन्ते जनांश्च हिंसन्ति। उपत्यकायां गङ्गातटे तावद् भुजङ्गा अपि स्युः हस्तिनोऽपि। पुत्रिके! कीदृशस्तवावासः? अपि हस्तिनस्तत्र नागच्छन्ति, सर्पाश्च न दृश्यन्ते? पुनश्च भारतं नाम निर्धनो देशः। रोटिकामात्रं खादित्वा जनास्तत्रोदरं पूरयन्ति। श्रूयते तत्र दुग्धस्य न्यूनत्वं नवनीतस्य चाखाद्यपदार्थैः सह मिश्रितत्वम्। पनीरं तु दृष्टिपथमेव नायात्। कीदृशस्ते भोजनविधिः, कथं च पचसे? पाकाय तत्र सौविध्यमपि न स्यात्। का वार्ता पुनः तव परिधानस्य?'

जीर्णवसना युवतिरेतस्मिन् क्षणे स्वीये शरीरे दृष्टिं व्यापारयति विषण्णवदना सती च पुनरपि पठनमारभते—

'गृहस्य सुखसमृद्धिं विहाय, पुत्रि! किमर्थं कष्टं सहसे तस्मिन् सुदूरस्थे दुःखबहुले भयास्पदे प्रदेशे? पुत्रिके! आगच्छ। यत्किञ्चिदपि सुखकरं मन्यसे निखिलेऽपि भूतले, तत्सर्वमेवोपस्थापयितुं समर्था वयं त्वदर्थम्।'

पत्रं पठित्वा सा विलुप्तधैर्या इव भवति, तन्नेत्रे अश्रुपरिप्लुते भवतः मुखारविन्दं च विषादच्छायाक्रान्तम्। परञ्च नीरूपे दृष्टिं व्यापार्य सा पुनरपि धैर्यं विन्दते। 'माता त्वेवमाह्वयति। न संभाव्यते कथमपि तत्स्नेहानृण्यम्। एतद्व्यतिरिक्तं तु किं नाम प्रयोजनं तत्र गमनस्य? सुखकरं जीवितम्? तत्तु किं स्यादतः परम्? अत्र निवसत्या मयानुभूतं यत् सुखं तु न तावन्मात्रं बाह्यसाधनापेक्षं यावन्मनोवृत्त्यनुवर्ति। बाह्यसाधनापेक्षं सुखं तु भोग्यपदार्थसामर्थ्यसापेक्षं भवति यद्दते सुखं दुःखरूपेण परिणमते। वातानुकूलितं कक्षं तावदेव सुखाय

भवति यावत् तद्वहिर्न गम्यते । वहिर्निर्गते सति त्वौष्ण्यजन्यं दुःखं कटुतरतामेव भजते । एतादृशं सुखं च न्यूनत्वाधिक्यपरिच्छिन्नं भवति । इन्द्रियाणि हि यावल्लभ्यसुखोपभोगपराणि । यद्यल्लभन्ते तत्तत् पायं पायं तानि ततोऽभ्यधिकमाकांक्षन्ते । नास्ति काचित् सीमा त्विन्द्रियाणामाकांक्षायाः । अशेषस्य जगतः सुखमवाप्यापि तानि तृप्तिं न लभन्ते । एवं सति, कः खल्वर्थ इन्द्रियतर्पणनिमित्तनियोजितपदार्थदासीकृतेन सुखोपार्जनपरेण जीवितेन ? तत्तु स्वातन्त्र्यापहारकम् आत्मपतनकारकं च । चिन्तय तावत् कथं खल्विन्द्रियाण्येव सुखं जनयन्ति । अपि स्वत एव ? नैवं तावत् । यावल्लभ्याः संवेदनास्तु तानि मनसि निक्षिपन्ति । याः संवेदनास्तावन्मनसि वृत्तिसामञ्जस्यमुत्पादयन्ति ताः सुखदा इति मन्यन्ते, तदुद्बोधकाः पदार्थाश्च सुखकरा इति । मानवस्य दौर्बल्यं त्वेतद्यन्मनोवृत्तिसामञ्जस्यायासावपेक्षते तांस्तान्पदार्थान् । वृत्तिश्चेत् स्वकीया तर्ह्यात्मबलेनैव समाधेया सा । अत्र निवसत्या मया प्रत्यक्षमेवानुभूयत एतत्सर्वम् । अथ विसृज्यैतादृशं जीवनविधिं कथं न्वहं प्रतिगन्तुं शक्नोमि स्वदेशम् ? पुनश्च, नीरूप ! त्वमप्यस्यत्रे' त्येतस्मिन् क्षणे ईषत्स्मिताननाऽधोमुखी तिष्ठति सा बाला । क्षणान्तरे पुनरपि मन्त्रयितुं प्रारभते—

'मातृचरणस्याभावश्चेदत्र, तं त्वहं प्रकारान्तरेण निराकरिष्णुः । गुहाभित्तौ तावदालिखामि तच्चित्रम् । भावानुप्रवेशात् तु तन्मातृपदमलंकरिष्यति ।'

एतदुक्त्वा साऽभिनवपल्लवपुटसन्निभे हस्ताग्रे सुधाखण्डमारोप्य भित्तावालिखति स्वत एव मूर्तिमती सती । नीरूपश्चैतदभ्यन्तरे मामवलोक्य 'एहि तावद् गङ्गावगाहनसुखं लभावहै ।' एतदुक्त्वासौ हस्तग्राहं मामुत्थापयति । 'रुचिरः खल्वेष प्रस्ताव' इति चिन्तयन्नहमपि तमनुसरामि ।

झटित्येव गङ्गातटमागच्छावः । बृहद्धाराप्रसारा साऽनुक्षणमुपजायमानाभिरुत्तालवीचिभिस्तरङ्गायते । 'तरणकुशलो नास्मि । अथ तीर एव स्नास्यामी'ति मयि निवेदिते नीरूपः सावज्ञं ब्रूते—'को लाभस्तावदेतादृशेन चञ्चुस्नानेन ? एहि मया सार्धम्; एतस्मिन् शिलोच्चयशृङ्गे आरोहाव जलधारायाञ्च कूर्दाव ।' 'दुष्करः खल्वेष प्रस्ताव' इति मया ससम्भ्रममुच्यते । आग्रहं तु तस्य तथापि न शक्नोम्यपाकर्तुम् । अथानन्यगतिकोऽनुसरामि तम् । पर्वतकमसावनत्यायासेनारोहति । प्रयतमानोऽप्यहं तमनुसर्तुं न पारयामि । यथा यथाऽऽरोढुं प्रयते तथा तथा नीचैर्गच्छामि । अथ नीरूपः स्वकीये पृष्ठदेश आरोप्योपरिष्टान्नयते माम् । सत्वरं शृङ्गे आरुह्यासौ झटित्येवात्मानं गङ्गायां निक्षिपति । अहं त्ववसन्नोऽस्मि नीरूपो जले निमग्न इति । परन्त्वसौ क्षणान्तर एवोन्मग्नशिरष्को मामपि तथैव

कूर्दितुं प्रेरयति । तदनुरोधवशाद् यावद् धारायां निक्षिपाम्यात्मानं तावत् पर्यङ्कशाय्यस्मीति प्रत्यभिजानामि स्वम् ।

एतस्मिन्नेव क्षणे घण्टाध्वनिरुदभूदाश्रमपदे । पार्श्ववर्तिभ्यः कक्षेभ्यो बहिरागत्य साधकाः त्वरया ध्यानाय गच्छन्ति । ध्यानकक्षनिर्गतेशस्तुतिर्निर्मलीकरोति कर्णकुहरम् । आश्रमस्थपादपकृतावासानां खगवृन्दानां कलरवः स्तुतिं तां पुष्यतितराम् । आकाशो निरभ्रोऽद्य । निलीनतारकोऽसौ लीलोपरामतां निदर्शयतीव । सन्ति तावत् तत्र जनाः, पादपाः, पक्षिणः, पर्वतशृङ्गाः, जलवीचयः···, परमेतेषां समेषामुपरि विराजते काचिदननुभूतपूर्वा शान्तिः । परिवेश एतादृशे स्वत एव कश्चिद् ध्याननिमग्नो भवितुमर्हति, परन्तु तावदेव यावन्मनोद्वेगो नोपजायते । उद्वेगे जागृते सति, आश्रमोऽनाश्रमो भवति, शान्तिरशान्तिः ।

मन्मनसि त्वसावेव नीरूपो मूर्तिमानिव वरीवर्ति । पूर्वेद्युः सहसैव मिलितः होरार्धमात्रमेव वार्ता जाता तेन सह । तथापि तेन मदीयं मानसमेतावन्मात्रमुद्वेलितं यथासावेतद्विधस्य स्वप्नस्य विषयः सञ्जातः । कोऽसौ यत्सत्यम् ? अपि सम्भाव्यते तदीया गुहा काचिदथवा मिथ्यैवैवं भणत्यसौ ? का खलु दोरोथी नाम सा बाला ? यत्सत्यं प्रतिवसति सा तेन सार्धं पारेगङ्गं गुहायां कस्यांश्चित् ? संभाव्यतेऽप्येतत् । अतिसाहसकर्माणः खल्वेते पाश्चात्यदेशीयाः । यस्मिन् कस्मिन्नपि कर्मणि नियुज्य पूरयितुं क्षमन्त एते । विज्ञाननिर्भरैतादृशी सभ्यता विकासमानीतैतैर्यत्सादृश्यं नोपलभ्यतेऽन्यत्र क्वचित् । सम्प्रति त्वेतेषां केचिद् गुहावासमभ्यसन्ति, तत्रापि दिवांगनासदृशीभिः प्रेयसीभिः सह । ध्रुवमेव तया बालिकया नीरूपप्रेयस्या भवितव्यम् । विचित्रा खल्वेषा साधनापद्धतिः !

परं किमेतेन विचारितेन ? अप्येतत् सर्वं सत्यं यत् स्वप्ने दृष्टम् ? मन्ये नीरूपो वास्तविकः । मिलितो ह्यसौ मया सह पूर्वेद्युः । परं कुत आगतैषा बालिका ? अधिकृत्य तां तु वार्तापि न जाता काचित् । नहि नहि, स्मरामि तावत् किमपि तदधिकृताया उक्तेः । असंशयं नीरूपेणोक्तं ह्यः—'अभ्यागतः कश्चित् सुहृदपि यदा कदा तत्रैव निवसती'ति । परं स्वप्नगता दोरथी तु नास्ति कादाचित्की । सा हि स्थायित्वेन तत्र निवसति । भवतु नाम दोरथी यथा वा तथा वा, अहं तु नैव प्रविष्टोऽस्मि तस्य गुहायाम् । गङ्गायां कूर्दनस्य तु कथैव न प्रसज्यते । अथ स्वप्नगतं व्यापारजातं कल्पनाप्रसूतिमात्रमिति निश्चीयते । परं तथाप्येतस्मिन् मम मनः किमर्थं बलवदभिरमते ?

एवं चिन्तयतो मम होराद्वयमतिक्रान्तम् । एतावता कालेन कालघटिकाया लघीयसी सूचिका नवाङ्के उद्गता दिवाकरश्च पर्वतशृङ्गादाकाशे आरूढः ।

चिरोपासिता इव रविरश्मयः पारणार्थं यत्र क्वचिदपि निपेतुः । यास्तावद् दिव्यसरिति निपतिताः तास्तु वीचिभिः साकं क्रीडाभिरताः, याश्च वनस्पतिष्ववतीर्णास्ताः पत्रपुटेष्वाकण्ठं पीतरसाः तृप्तिं गताः ।

पक्षिणस्तु छायामाश्रित्य परस्परं समलपन्त । कस्तावत् तेषां संलापविषय इति को निर्धारयितुं पारयेत् ? गङ्गां स्तुवन्ति हिमालयं वा ? अथवाऽन्योन्यसम्बन्धविषयिकी काचित् समस्या तेषां पुरस्तादुपस्थिता यां समाधातुं समवेताः सन्त्येते ? अथवा तेषु केनचित् स्वप्नो दृष्टः कश्चिद् यदर्थः सम्भूय विविच्यते ...ः ? को निर्धारयेत् ? पुरा किलर्षयः पशुपक्षिभाषाविद आसन् । सा ज्ञान...म्परा कच्चिदद्यापि सन्तता स्यात् । वनस्पतयस्तु सततं मौनव्रतिन एव ...तिष्ठन्ति । तैस्तु निरन्तरं स्वप्नदर्शिभिरेव भवितव्यम् । कीदृशः खलु तेषां ...स्वप्नः ? यद्वा तद्वा भवतु, सुखात्मकेन तेन भवितव्यम् । एतादृशी स्निग्धता हि पल्लवेष्वन्यथा दृग्गोचरा न स्यात् । पर्वतराजो हिमालयोऽपि स्वप्नरतः कच्चित् ? अविकलमौनव्रतो ह्यसावधिष्ठितखगान् वनस्पतीन्, सञ्चरितपशून् वनखण्डांश्च बिभर्ति, मानसाच्च कलकलनिनादिनीं सुरसरितं विसृजति । कच्चिदेते सर्वेऽपि स्वप्निला एव ? एवं चेत्, एतेषां स्रष्ट्रा तु महत्स्वप्नदृशा भवितव्यम् । न वा भवत्वसौ स्वयमेव स्वप्नदृक्, परमेतेषु गिरिगह्वरेषु नीरवशान्तिप्रदानपूर्वकं तेनैतद्विधा मनीषिणो जनिता येषां दृशि जगत् स्वप्निलं भवति, स्वप्नश्च भाव्यर्थनिर्भरः ।

एवं चिन्तयन् यावद् गङ्गातटोन्मुखमवतरामि तावद्राजमार्गे बृहज्जनसम्मर्दं पश्यामि । कश्चिच्छिरसि कश्चित् स्कन्धे कश्चिच्च पृष्ठदेशे धृतपोट्टलिकः प्रस्वेदक्लिन्नवासाः सततमुद्गामिनं पन्थानं शनैः शनैरनुसन्धत्ते । लगुडावलम्बितकाया वृद्धा मन्दं मन्दमग्रे सरन्ति, शिशवश्च गृहीताङ्गुलयः स्कन्धाधिरुढा वेतस्ततो दृष्टिं क्षिपन्तः कौतुकाविष्टा इव लक्ष्यन्ते । कदाचिच्च ते तरङ्गायमाणां विस्तृताभोगां हरहरेत्युच्चैश्शब्दायमानां रविरश्मिसंस्पर्शद्रवितरजतनिचयसन्निभां भागीरथीम्, कदाचित् पार्श्वान्तरावस्थितमेकपद एवोत्थितकायं वृष्टिजलस्नानघनीभूतकृष्णवर्णं वनस्पतिसम्भाराम्बरधरं विटपिगणैरहमहमिकयोच्चोच्चतरमारुह्यमाणं पदे पदे झर्झरिति प्रपातोत्थिताभिर्ध्वनिभिरनवरतमनुरण्यमानम्, उदरदेशे शिशूनारोप्य विटपाद्विटपान्तरमुत्प्लुत्योत्प्लुत्य क्रीडन्तीभिर्वानरीभिः तत्सहचरैर्वानरैश्च चालितशाखिनं शिलोच्चयं कदाचिच्चोत्तरोत्तरमुत्थिततलं जनसम्मर्दपूर्यमाणं गमनागमनशीलैरभियन्त्रितयानैरुत्पाद्यमानबिभीषिकं राजपथं विलोकयन्तः कूतुहलं शमयन्ति । वसनसूचितदारिद्र्याः श्रान्तप्रायाश्चाप्येते वृद्ध-

जनाः किमर्थं सोत्साहा अम्लानवदना अमन्दानन्दसन्दोहनिर्भरा इव लक्ष्यन्ते इति जिज्ञासाप्रेरितचित्तेनास्मन्मित्रेण नरेन्द्रेणान्यतमस्तेषां पृष्टः—

'कोऽस्ति गन्तव्योऽत्रभवताम् ?'

'श्रीमन् ! बदारिकाश्रमयायिनो वयं भगवतो बदरीनाथस्य विष्णोर्दर्शनाय।'

'कस्माद् भूभागाच्चागम्यते भवद्भिः ?'

'श्रीमन् ! काशीजनपदादागच्छामः।'

'काश्यां तु भगवान् विश्वनाथ एव साक्षात् समासीनः। विहाय तं देवाधिदेवं किमर्थं भवद्भिरेतावद्दूरपर्यन्तमागम्यते आत्मा च कष्टे निपात्यते ?'

सुष्ठूक्तं भवता। काशी खलु त्रिलोकोत्तरा। तत्र हि भगवतीभागीरथी-सुभगजलप्रक्षालितपादपद्मो भगवांच्छिव एव कृतसद्मः। परन्त्वसावपि मूलतो हिमालयादेव गतस्तत्र। भगवती भागीरथ्यप्येतस्मादेव देवभूमिभूताद् हिमालयात् प्रभवति। मूलानुसन्धित्सवो वयम्। विष्णुपादपङ्कजरजस्स्पर्शं विना नास्ति शान्तिः। तन्मार्ग एव चेदेतादृशाह्लादकरः तर्हि साक्षात् तद्दर्शनं कियदानन्दकरं भविष्यति ! तद्दर्शनाकांक्षावसान् मार्गगतं कष्टमप्यनायासं सह्यते, कल्मषमपि विगलितं भवति। भागवती शक्तिरेवास्माञ्चालयति। भगवती भागीरथी स्वयमेवास्मान् धामपर्यतं नेष्यति। जनास्तु पुण्यपर्वेषु स्नात्वैवैतस्यां स्वर्गार्हान् मन्यन्त आत्मनः। अत्र त्वेषा प्रत्यक्षमेव त्रिष्गुरद्रं नयति। तत्र किल भगवान् नारायणो नरेण सार्धं तपश्चक्रे।

'कोऽसावासीन्नरो यः खलु तपस आचरणे भगवतो नारायणस्य सहचरो बभूवे'ति नरेन्द्रेण पृष्टोऽसाववादीत्—

'नारायणस्तु नरमपेक्षत एव। भगवतः कृष्णस्यापि लीलासहयोगिनो गोपाला बभूवुः।'

'परं कोऽसौ नर आसीत् येन तावद् हिमाच्छन्नेऽपि तस्मिन् प्रदेशे नारायणद्वितीयेन तप आचरितम् ? कुतस्त्वसौ समायातः कुत्र च गत' इत्येवमेकेन पार्श्ववर्तिना युवकेनाभितर्कितम्।

'न तर्क्यैवं भागवती कथा। अनादिनिधना हि से' त्यवादीद् वृद्धजनः। 'एनामेवावलम्ब्य जनाश्चिरकालादागच्छन्त्यत्र धन्यजीवितांश्च मन्यन्त आत्मनः। श्रूयते किल भगवानादिशङ्कराचार्यः सुदूरादपि केरलप्रदेशात् पदातिरेव बदरिकाश्रममाजगाम। ततोऽपि पूर्वतरं भगवान् व्यासदेवो गुहायां निवसन्ने-

वैकदन्तेन भगवता गणेशेन महाभारतं लेखयाञ्चकार। यन्नेहास्ति न तत् क्वचिदि' त्येतद्विश्वस्य सर्वज्ञानाभोगस्य महाभारतस्य रचनार्थं तेन तस्मिन् कष्टसंचारेऽपि युगे बदरिकाश्रमो वृत इत्येतावता ज्ञायते तस्यां भूम्यां भगवतोंऽशविशेषः कृतावतार इति येनाकृष्टा विद्वांसोऽप्यविद्वांसोऽपि, ज्ञानिनोऽप्यज्ञानिनोऽपि, धनिनोऽपि निर्धना अपि सुदीर्घकालात् तत्र गच्छन्ति। किं भवन्तोऽपि तत्रैव जिगमिषव' इति तस्मिन् ज्ञानवयोवृद्धे जिज्ञासमाने मयोक्तम्— 'नैतादृशमस्मद्भागधेयम्। वयं तु निर्लक्ष्यमितस्ततो भ्रमामः। भवदीया धर्मयात्रा शिवा भवेदित्यस्मदभ्यर्थना।'

सेतुमतिक्रम्य सघनच्छायरसालराजिमध्यतश्चलित्वा होरार्धमितेन कालेन स्वर्गाश्रममागतावास्व। अत्र घटिकया द्वादशवादनकालः सूचितः। एतावता कालेन भगवान् भास्करो भूयसीं ज्वालामसृजत्। अथ समीपस्थवाटिकायां मौलश्रीपादपस्याधस्तान्नियोजितोपलपट्टिकोपरि स्निग्धच्छायायां विश्रान्तिर्लब्धा। एतस्मात् सुखदतरं किं नु स्यात्? एकस्मिन् पार्श्वे पुण्यसलिला मन्दाकिनी पार्श्वान्तरे च पादपाच्छन्नः पर्वतराजः। एतयोर्मध्ये विद्यते समतलप्रायः प्रच्छायबहुलो भगवद्दर्शनाभिलाषिजनाकीर्णो भूखण्डः। मन्दाकिनीप्रवाहस्पर्शी वातो धर्मक्लान्तं शरीरं शीतलस्पर्शेन सुखयत्यत्र। भिक्षुकाः साधवश्चात्र वेषसाम्यादन्योन्यविभ्रममुपजनयन्ति। 'भूतभावनो भगवांच्छङ्करोऽप्यत्रागच्छेदकिञ्चनवेषश्चेत् को नामाभिज्ञातुं शक्नुयादि' त्येवं मयि प्रसङ्गवशादुक्तवति सहसोवाच नरेन्द्रः—

'विभ्रमस्य परिहाराय समीपतो ज्ञेयोऽसौ भूतभावनः।'

'सुष्ठूक्तं भवता। परं सम्भाव्यते नाम कथमेतत्?'

'अस्ति सुकर उपायस्तद्दर्शनस्य।'

'भवतु, उच्यतां तावत्।'

'अतो नातिदूरे विद्यते भगवतो नीलकण्ठस्यास्पदः। तद्दर्शनाय गन्तव्यं तत्रैव।'

'गमनाय त्वहं यत्र क्वापि सन्नद्धोऽस्मि। परं गत्वा तत्र किं लप्स्यावहे? दर्शनाय तत्र काचित् प्रतिमा स्यात्। देवप्रतिमास्तावद् भूरिशो दृष्टाः। प्रतिमया सह प्रतिष्ठापितं शिवलिङ्ग' त्वेकमत्रैव विद्यते पुरोवर्तिनि शिवालये। तत्रैव किमर्थं न गम्यते साक्षात्कारार्थम्? एतस्मिन्नेव परमार्थनिकेतने शतशोऽपि प्रतिमा विद्यन्ते। को लाभः प्रतिमादर्शनेन?'

'मैवं तावत् । सन्तु नाम प्रतिमाः शतशः सहस्रशो वा, नीलकण्ठस्तु विशिष्ट एव । तत्रत्यं शिवलिङ्गं किल बदरिकाश्रमप्रस्थितेन भगवताऽऽदिशङ्कराचार्येण प्रतिष्ठापितमिति श्रूयते ।'

'भ्रातृवर ! अलं विचार्य । पन्था अपि दृश्यस्तत्र, आचार्यप्रवरप्रतिष्ठापितं शिवलिङ्गमपि । एतयोरुभयोरुपरि भूतभावनस्य भगवतो वैभवोऽप्यनुभवगम्यस्तत्र । तदनुभूत्या तु मनोकामनाः पूर्यन्ते, दुस्साध्या अपि समस्याः समाधीयन्ते ।'

'आम् । अवबुद्धम् । अस्ति समाधेयैतादृशी समस्या । गच्छाव तावत् । कियद्दूरे तावन् नीलकण्ठपुरी ?'

❁ ❁ ❁ ❁

एवं निश्चित्य वेगेन गच्छतोरावयोः पुरस्तादुपत्यकातिक्रमणानन्तरं पर्वतशृङ्गं समागतम् । क्षीणकाया अप्यत्युत्तुङ्गाः पादपाः पर्वतशृङ्गेन सह प्रतियुञ्जाना इवालक्ष्यन्त । सघनत्वादल्पशाखिभिरपि तैर्भूयसी छायोत्पादिता । पाषाणमध्यतो यथाकथञ्चिन्निर्गत्य दूरमुद्गतैस्तैर्बलवती जिजीविषा प्रकाशिता । क्लिष्टोत्पत्तिर्हि सङ्कल्पवान् भवति । केचित् पादपास्तु पादपान्तरस्कन्धजाताः तन्नियोजितभराः तत्समन्तात्प्रसारितमूलाश्च तद्रसेनैवात्मनोऽपोषयन्त । वनस्पतयोऽपि परस्कन्धजीविनो भवन्तीत्यत्रैव सविशेषमनुभूतम् । वीरुधां कथैव भिन्ना । आरुह्यमाणविटपिरसं पायं पायं पीनत्वमभजन्त ताः । परसत्त्वलुण्ठनपूर्वकमात्मसत्त्वपोषणेच्छा चेज्जडपदार्थेष्वेतादृशी तर्ह्यमितबुद्धिबलसम्पन्नस्यात्महितमात्रचिकीर्षोर्नरस्य का वार्ता ? आत्महिताय त्वसावशेषमपि जगल्लुण्ठितुमर्हति ।

बिल्वबहुलस्तावदेष मार्गः । मन्ये भगवतो नीलकण्ठस्य बिल्वप्रियत्वमेव मनसि निधाय प्रकृतिदेव्या बाहुल्येनोत्पादिता एतेऽत्र । अत्रोपजातानामितरेषामसंख्यप्रकाराणां वनस्पतीनां परिचयं कः कारयितुमर्हेत् । आदिकविना वाल्मीकिना तावद् दक्षिणापथ एव स्वीयं वानस्पतिकं विवेकमुन्मीलितम्, भट्टबाणेन विन्ध्याटव्यामेव दृष्टिरनुरञ्जिता, कालिदासेन च हिमालयमारुह्याप्यन्तिसरसत्वादनवहितो ह्येष प्रदेशः ।

कालस्तावदनवरतप्रचारः । मन्ये समगतिरप्यसौ । परं कदाचिदेतावत्या द्रुतगत्या प्रचलत्यसौ यथा तत्सहचरिष्णुर्जनोऽधिकादधिकतरं पृष्ठत एवावसृज्यते । आवाभ्यामपि यथा यथाऽऽत्मगतौ द्रुतिरानीता तथा तथा कालेनापि द्रुततरत्वमवलम्बितम् । पुरस्तादपि गगनालेहिशिलोच्चयशृङ्गं पश्चादपि पार्श्व-

योरपि। शृङ्गचतुष्टयस्योपरि नीलमातपत्रमिव विराजते स्म गगनमण्डलम्। वनस्पतिमात्रसहायावावां तस्मिन् प्रशस्तपार्वत्यकक्ष एकाकिनाविवाभवाव सम्प्रति। केवलं नगप्रतिघातोपबृंहिताभिर्मयूरकेकाभिरेव यदा कदा ऽस्मद्भीतिभोगिनोऽपसारिताः। अकाल एवात्मानं शिखरपृष्ठे तिरोधाय भगवान् मरीचिमाली पर्यैक्षतेवास्मद्धैर्यम्। उत्तुङ्गेषु विटपबाहुषु घनीभूतत्वात् कृष्णायमानपत्रपुटपरिधानं प्रसार्य प्रवातोत्पादितनर्तनविभ्रमाः पादपा अस्मत्साहसिक्यमुपाहसन्निव। कुतश्चित् कश्चिद् हिंस्रजन्तुराक्रमेदित्याशङ्का सततमातङ्कमजनयत्।

एकतस्तु महती विभीषिकाऽपरतश्च पर्वतारोहणजन्या श्रान्तिः। पदे पदे त्वावयोर्द्विपात्त्वमपर्याप्तमभूत्। सरीसृप इव सर्पन् मार्गावरोधा अतिक्रान्ताः। एवमेवोच्चावचं चरन्तावेकं वानरक्षेत्रमागतावास्व। महती भीतिस्तावदुपजाता श्वेतवर्णान् विशालकायान् प्रलम्बलाङ्गूलान् वानरान् दृष्ट्वा। भयाक्रान्तौ यावत् क्षेत्रात् तस्मात् सत्वरमपक्रमितुमैच्छाव तावद् वानरा एव पल्लवात् पल्लवान्तरं विटपात् विटपान्तरं वृक्षाद् वृक्षान्तरं वनाच्च वनान्तरं पलायितुमुपचक्रमुः। कियद्भ्रान्तिपरासीदस्मद्भीतिरत्र !

वानराकीर्णं वनषण्डमतिक्रम्य मार्ग ईषन्निम्नाभिमुखः संवृत्तः। अरण्यानी तत्र सघनतरत्वं भेजे। गुल्मा गुल्मैरमिलन्त, पादपाश्च पादपैः। वृक्षा लताच्छन्ना आसन्, लताश्च वृक्षाधिरूढाः। कश्चित् प्रपातध्वनिरपि कर्णपथमागतः। प्रपातोपरिष्टाद्विचरतां भल्लूकानां घोरो रव उद्वेजकः संवृत्तः। पार्श्वान्तरे गजदलविदारितविटपविषण्णवदना विटपिनो वन्यगजाकुलतां न्यवेदयन् तद्भूभागस्य। तथाप्यात्मातिमात्रं रेमे तत्र। मनसि जातमत्रैव विरमितव्यमिति। परं क्वासीत् विरामभूमिः? भूरिशो न्यस्तलक्षणेभ्यो वृकवराहभल्लूकव्याघ्रप्रभृतिभ्यो हिंस्रपशुभ्यः क्वासीत् शरणं नाम ?

अथ पदास्फालनगतिर्द्रुततरा कृता, व्रततिमवलम्ब्य लतागुल्मानपसार्य पाषाणखण्डांश्चोल्लंघ्य कथञ्चिन्मार्गोऽन्विष्टः। होरार्धानन्तरं नगाग्रस्य दक्षिणे पक्षे समुन्नतं स्थलमागतमेकम्। परिश्रान्तान् पादान् विरामयितुं मुहूर्तं स्थित्वा यावद् दक्षिणाशायां दृष्टिः प्रसारिता तावदरण्यान्यवलोकिता काचित् सुदूरपर्यन्तविस्तृता। तन्मध्यगता सुरसरित् क्वचिद् द्विधा क्वचिच्च सप्तधाऽऽत्मानं विभज्य वनश्रीवक्षःस्थलपिनद्धमुक्ताफलहारस्य शोभामवाप। तत्स्पर्शिमरुच्छिलोच्चयेन संघृष्य जातक्षोभः सन् वनस्पतीन् दोलयामास। तज्जन्यं शैत्यमस्म-

त्वलमं हर्तुमलंत्रभूव । परं सिंहादीनां गर्जना सुदूरादप्यागता सती मनसि महतीं भीतिमुत्पादयामास ।

एतावता कालेन भगवान् मरीचिमाली समाकृष्टाशेषरश्मिजालो हरित-वर्णोपत्यकावनस्पतिपरिधानान्तर्हिताननो बभूव । तत्तिरोभावोपजनितोत्साहस्तिमिरखलशिगलोच्चयगुहाभ्यो निस्सृत्य क्रमणमारेभे समन्तात् । इतस्ततो झिल्लीसर्पोलूकानां स्वरः श्रुतिविवरं प्रविष्टः । अधोवर्तिवनादुत्थितेन मेघगर्जनसन्निभेन वनराजरवेण मिश्रित एष स्वरो भयावहं संगीतकमुपस्थापितवान् । एवं बहुविध-संकटापन्नमार्गेण चलद्भ्यामावाभ्यां होरार्धेनैका समुन्नततरा स्थली समधिगता। सम्प्रति तिमिरनिवहनिबिडे आकाशे तारागणाः स्फुटं चकाशिरे । मन्ये आरोहणपरयोरावयोरनुकम्पमानास्ते स्वीयानि रश्मिजालान्यधस्तान्निचिक्षिपुः । दक्षिणाशायां त्वाहरिद्वारं तारका विद्युद्दीपकाश्चान्योन्यविभ्रममुपजनयामासुः । प्रतीच्याञ्च विटपान्तरालाद् ऋषिकेशस्था विद्युद्दीपा होराचतुष्टयपर्यन्तकमस्मदायासं विलोलुपन्त इव नगस्याधस्तात् स्थिता इव चकाशिरे । पूर्वाशायामप्यनतिदूरे तिमिराच्छन्ने उपत्यकागह्वरे केचिद्दीपा रश्म्यङ्गुलीभिरावामुपनिमन्त्रयन्त इव दृष्टिपथमागताः । तत्रैव भगवान् नीलकण्ठ इति नरेन्द्रे सहसोक्तवति मानसं श्रद्धावनतं जातम् ।

अथ सद्य एवोत्थाय क्रमणमारब्धम् । अशेषोऽपि पन्था अधोमुखो निबिडान्धकाराच्छन्नश्चासीत् । चाक्षुषव्यापारोपरामपरे कालेऽस्मिन् घ्राणेन्द्रियायाननुभूतपूर्वोऽवसरः समुपस्थितः । वायुमण्डलं सुरभिभरान्वितमनुभूतम् । मन्ये गह्वरासीनगिरिजापतेर्मोदनाय निखिलमप्यामोदसम्भारमत्रैव पुञ्जीकृतं गिरिराजेन । यथा यथा नीचैरवतरितं तथा तथा तमोराशिः सघनतरत्वं भेजे । मन्ये महादेवः सम्प्रत्यप्यस्मद्धैर्यं परीक्षितुकाम आसीत् । अथवाऽनभिव्यक्तस्वरूप ईश्वर एतद्विध एव भवति । 'तमसो मा ज्योतिर्गमय' इत्येषा वैदिकी प्रार्थना चरितार्थात्र जाता । विघ्नबहुलेऽवसरेऽस्मिन् पुरोवर्तिनं मन्दं मन्दं प्रकाशमानं विद्युत्प्रदीपनिकरं गन्तव्यनिर्देशकत्वेन मार्गानुसन्धानसहयोगी बभूव ।

अन्ततोगत्वा सत्वरमुपचीयमानः प्रपातध्वनिश्श्रुतिपथमागतः । शनैश्शनैः प्रकाशोऽपि विस्तारमवाप । तेनैव साकं चक्षुर्विषयीभूता प्रपातपटहाभिनाद्यमाना भगवन्नीलकण्ठकृताधिष्ठाना समन्तात् पर्वतराजपरिरक्षिता सा तन्वङ्ग्युपत्यका ।

परं सिद्धयस्तु विघ्नबहुला भवन्ति। सद्य एव भगवद्दर्शनाकांक्षिभ्यामावाभ्यां देवायतनमुपगम्यावगतं संवृतकपाटमिदमिति। रात्र्यावासानुसन्धाननिरतेन नरेन्द्रेण सार्धं पुण्यनीलकण्ठपुर्या उच्चावचासु वीथीष्वितस्ततोऽटमानोऽहं देवायतनस्य वामपार्श्वेऽपश्यं त्रिशूलपाणि चन्द्ररेखाखचितभालं शिरोधराभोगपिनद्धमालाजालं भस्मावलिप्ताशेषाङ्गं कटिप्रदेशावनद्धमौञ्जीकं व्याघ्रचर्मोपरिबद्धसिद्धासनं पुरस्तादवस्थितत्रिशूलपरिवृतयज्ञकुण्डप्रज्वलितहव्यवाहोद्भूतधूमनिचयं शाम्भवीमुद्राविच्छुरिताननं साक्षाच्छिवस्वरूपं शैवाचार्यम्। प्रणम्य तं भस्मप्रसादं च गृहीत्वा ततो नातिदूरस्थायां विपणिकायामभ्यवहारं कृत्वा तत्पार्श्वस्थायां धर्मशालायां कम्बलास्तीर्णभूमावेव सुप्त्वा निशावसानं स्वप्नैरपि नावबुद्धम्। मन्ये प्रभूतश्रमानन्तरमप्यलब्धनीलकण्ठदर्शन आत्मा मार्गस्थनैशान्धकारजालावच्छिन्नोऽज्ञातगतिरेवेतस्ततो बभ्राम।

प्रातरुत्थाय कक्षाद् बहिर्निर्गत्य च यावत् समन्तादवलोकयामि तावदात्मानं लोकान्तरागतमिव प्राप्नोमि। चतस्रोऽपि दिशो गगनचुम्बिभिः पर्वतशृङ्गैः परिवृताः सन्ति। निखिलापि नीलकण्ठपुरी निपीतनीरह्रद इव दृश्यते। भगवन्नीलकण्ठधामपार्श्वत उद्गीर्णो जलप्रपातो झर्झरित्यनवरतमुत्पद्यमानेन स्वनेनातीतैतिह्यगाथां श्रावयतीव। धाम्नः पृष्ठदेशेऽवस्थितस्य गह्वरस्यापरकूल उपजातं वनसरोरुहद्वयं गीयमानां चिरन्तनां गाथां पत्रपुटशिरश्चालनेन समर्थयतीव। भगवत्पादमूलेऽर्पितं तत्प्रसूननिचयमवस्थां तां स्मारयतीव यस्यां खलु जलनिमग्नो जलाषभेषजो नीलकण्ठो सरोरुहविशीर्णैः पुष्पैः स्वयमेवाराधितो बभूव। धाम्नः पृष्ठदेशेऽवस्थितो जीर्णपिप्पलवृक्षो मन्येऽसावेव यस्योपरि श्रुतिविश्रुतौ सयुजौ सखायौ सुपर्णौ वासं चक्रतुर्ययोरेकस्तावत् स्वादुपिप्पलं भुञ्जानः संसारं जनाकीर्णं चकार, अपरश्चानश्नन् स्वीयां शाश्वतीमद्वैतताञ्च रक्षन्नत्रैव नीलकण्ठरूपेण रुचितनिवासो बभूव। मन्ये तद्विसृष्टं लोहितत्वमुभयसन्ध्याकाले पर्वतशृङ्गेषु मण्डलीभूय पुनः स्वीकरणावसरं प्रतीक्षते। सूर्यः प्रत्यहमुदीय देवाधिदेवस्य द्वारमुद्घाटयति, उषा तदीयां श्रियमुद्भासयते, पवनो वनस्पतिचालनेन तं वीजयते, आकाशस्तदीयां नीलिमां वितनुते, अभ्रस्तत्पादपङ्कजं प्रक्षालयति, विद्युच्च तमोनिगूढं तत्स्वरूपं प्रत्यक्षीकरोति। असौ तु संवृतसर्वाङ्गः परिहितनीलिमो वितरितशिवत्वः प्रशान्तभावेनैतस्यामुपत्यकायामचलो विराजते।

रविरश्म्युद्भासितजलप्रपातस्नानपवित्रीकृतात्मना मयापि देवालयं प्रविश्यैवमुद्भावितस्वरूपोऽसौ भगवान् नीलकण्ठः प्रत्यक्षीकृतः। देवाधिदेवस्य

सर्वमयत्वेन साक्षात्करणं साक्षात्कारभावनायाः पाषाणपिण्डेऽर्पणं पिण्डस्य च दुर्गमे गह्वरे प्रतिष्ठापनं भक्तजनैश्च तदनुसन्धानं तत्साक्षात्करणं तदनुभावनञ्च—विचित्रः खल्वयमध्यात्मोपक्रमः !

  

आप्यायितभगवन्नीलकण्ठदर्शनाभ्यामावाभ्यां यथागतेन पथा प्रातरेव प्रत्यावर्तनं प्रारब्धम् । प्रत्यावर्तनं तु सुकरं जातम् । रविरश्मिभिस्तमसोऽपसारणात्मार्गः संलक्षितनतोन्नतभूमिभागोऽभवत् । होरामात्रेणैव तस्मिन् स्थले प्रत्यागतौ यतः खलु पूर्वसंध्यायां नीलकण्ठस्था विद्युत्प्रदीपा अवलोकिताः । अत्र घटिकया नववादनकालः सूचितः । अथ सत्वरमृषिकेशं प्रति निर्वर्तितव्यमिति मनसि कृत्वा भगवते नीलकण्ठाय भूयोऽपि प्रणिपातो निवेदितः ।

अचिरकालेनैव पर्वतशृङ्गाधःस्थिता महती छाया प्राप्ता । सुदूरारूढैः सघनच्छायैः पादपैर्भृशं शैत्यं प्रदत्तम् । मार्गश्च निम्नाभिमुखोऽभवत् । क्रमणं सुकरं संवृत्तम् । नीलकण्ठयायिनो जना भूरिशोऽमिलन् । अनेनैव क्रमेणामिलत् पुष्टाङ्गोऽपचितोदरः स्कन्धावलम्बितोत्तरीयो जानुपर्यन्तकर्तिताधोवस्त्रः प्रस्वेदाकुलाननः कर्तितकेशः प्रसन्नवदनश्च जर्मनदेशीय एको युवा ।

'कियद्दूरमितो नीलकण्ठ' इत्यस्फुटाँग्लभाषया तेन पृष्टो न्यवेदयमहं 'होराद्वयक्रमणपर्यन्तमि' ति । जातकुतूहलेन मया पृष्टः किमर्थमसावेकाक्येवैतस्मिन् पर्वतीये प्रदेशेऽटति किं च तस्य नीलकण्ठयात्रेयेति । पुनरप्यस्फुटभाषया भणितं तेन यद् भगवन्नीलकण्ठं प्रति तन्मनसि महती श्रद्धा विद्यते, अथ च हृदयेन दिदृक्षतेऽसौ तम् ।

'अद्यैव निर्वर्तिष्यते भवानि' त्यसौ पुनरपि पृष्टो मया । 'न तावदद्यैव । केचिन्मे सखायः सम्प्रति नीलकण्ठधाम्नि निवसन्ति । कतिचिद्दिवसपर्यन्तं तैः सह तत्रैवोषित्वा सर्वेऽपि वयं ततोऽप्यूर्ध्वं जिगमिषवः स्मः । केचिदस्मत्सखायस्तत्रैव सम्प्रति गुहासु निवसन्ति । अस्माभिरपि तैः सह तत्र तथैव निवसितव्यमित्यस्ति साम्प्रतिको नः सङ्कल्पः ।'

तस्मिन्नेवमुक्तवति स्मृतिपथमायात एको वैदेशिको युवासंघः पूर्वसन्ध्यायां विरलजने नीलकण्ठधाम्नि पिप्पलच्छायायामुच्चावचे पथीतस्ततो विचरणपरः स्थानीयैश्शिशुभिश्च 'हरहरमहादेवे' ति पुनः पुनरभिनन्द्यमानः । सर्वेऽपि ते युवानो हैमवतं शैत्यमनादृत्य कृच्छ्रवस्त्रावृता आसन् । तन्मध्ये स्वच्छन्दं चेरुर्युवत्यः प्रलम्बकेश्यश्चलितपयोधरा बभ्रुलोचनाः सुवर्णवर्णाश्च । एष जनस्तावत् तानेवोद्दिशतीति मनसि निश्चयो जातः । कीदृशी नु विडम्बना यदेते

जना: स्वदेशीयं सुखसौविध्यं विहायैतस्मिन् गिरिप्रदेश एतादृशं कष्टं स्वेच्छया सहन्ते ! किं नाम प्रयोजनं स्यादेतेषामेतस्मिन् कष्टबहुले जीविते? का वा विभीषिकैतेषां समक्षमुपस्थिता ययोत्पीड्यमाना एते हिमवद्गुहाश्रयिण: संवृत्ता: ? इत्येवं विमृशन् यावद् विचारमग्नोऽभवं तावदपसृतदृष्टिबन्धनोऽसौ युवा शनैरपचक्राम ।

अपक्रान्ते तस्मिन् परिवृत्य मुहुर्मुहुस्तमेव दिदृक्षोस्तमेवाधिकृत्य विमृशतो यत्र क्वाप्यविचारितपूर्वकं न्यस्तचरणस्य मे तस्मिँल्लतागुल्मबहुले प्रदेशे पथविभ्रमो जात इति शङ्का मनस्युदपद्यत । शङ्कयाऽनयाऽऽविष्टो यावदवहित: पश्यामि तावत् स्पष्टतरं प्रतीयते यत् स्वीकृत: पन्था: कांश्चिद् घोरामरण्यानीं नयति यत्र खलु प्रथम एव कल्पे क्वचिद् हस्तिपादाङ्का लक्ष्यन्ते क्वचिच्च लतागुल्मासक्ता भल्लूकलोमगुच्छका: । 'पथभ्रष्टौ स्व:रि' ति मुखान्निस्सारयन् यावन्नरेन्द्रोन्मुखो भवामि तावत् सुप्तोत्थित इवासावितस्तत: ससम्भ्रमं दृष्टिं प्रसार्योद्भ्रान्त इव मामवलोकयति ।

'कथं तद् यद् भवतापि मार्गविभ्रमो नोपलक्षित' इति मया पृष्ट: सोऽवादीत् ।

'पश्यतु तावत् स्वयमेव भवान् कथं खलु पुरोवर्तिशिलोच्चयो नीलिमा-संघातस्वरूपे व्योम्नि निस्तब्धयोगीव ध्यानमग्नो लक्ष्यते । अदस्तद्दृष्टियुगलम्, असौ नासिका, अदश्श्मश्रु:, अदो जटाजालम्, अद: स्कन्धद्वयम्, अदश्च वक्षरिति । तमेवाधिकृत्य विमृशता भवत्पदमनुगच्छता च मया न तु वामतो दृष्टं नैव दक्षिणत: । सम्प्रत्यभिजानामि मार्गादपसृतोऽस्मीति । घोराऽरण्यान्येव दृश्यते समन्तात् । परमेतस्मात् स्थलाच्छिलोच्चय एष रम्यादपि रम्यतरो दृश्यते । अथानुमन्येच्चेद् भवांस्तर्हि दृश्यमेतच्चित्रार्पितं करिष्ये । अचिरेणैव कालेन रेखाचित्रं निष्पादयिष्यामि।'

सुतरां मार्गविभ्रमाभिज्ञोऽप्यसौ दृश्यविशेषाकृष्टचित्त: स्कन्धदेशाद-वलम्ब्यमानां पोट्टलिकामवतार्य शुष्कमसिकां लेखनीं च हस्ताग्र आरोप्य रेखा-चित्रणं प्रारभत । मम पश्यत एवासावचिरेणैव कालेनाशेषमपि श्रृङ्गमेतावत्कौ-शलपूर्वकमालिखितवान् यथा सम्प्रति मद्दृष्टावपि तद् ध्यानावस्थितयोगीव प्रत्यभात् ।

'एतद्विधयोगिराजसमक्षमप्यावयो: किमप्यहितं भव्यं किम् ?' इति मय्युक्तवति नरेन्द्र: सत्वरं प्रत्यवदत्—

'बन्धुवर ! चित्राङ्कनमात्रमेतत् । व्याघ्रे भल्लूके वा कस्मिंश्चित् सन्निपतति किं नु कर्तुमर्हेदेष चित्रार्पितो योगी ? का वार्ता पुनश्चित्रात्मकस्य, वास्तविकोऽपि योगी व्याघ्रं दृष्ट्वा पलायनमेवाश्रयिष्यति ।'

नरेन्द्र एवमुक्तवति, यावत् ससम्भ्रममितस्ततो दृष्टिं प्रासारयं तावदपश्यमधस्तादुपत्यकायां खमुत्पतन्तीं धूमराजिमेकाम् । जनः कश्चिन्निवसेत् तत्रेत्यनुमीय तत्रैव गत्वा प्रष्टव्यमृषिकेशपन्थानमिति च निश्चित्य सत्वरमवरोहणमारब्धम् । लतागुल्मविटपापसारणपूर्वकं नीचैः प्रचलिते सति सरीसृपभल्लूकवृकव्याघ्रादिहिंस्रपशवाचरिताक्रमणस्याशङ्का पदे पदेऽबाधत । निर्जने पर्वतीयप्रदेशे चेत् किञ्चिदाश्वासनायाभूत् तत्तु दिवाकरतेजः । गगनारूढस्य तस्य घर्मस्तावत् सघनच्छायगुल्माभ्यन्तरमपि तथा व्याप्नुयाद् यथा हिंसाजीविनां ततोऽप्यपसारणायालं स्यादिति विश्वासो ऽस्मद्धैर्यसम्बलो बभूव ।

एवं गुल्माद् गुल्मान्तरम्, उपलखण्डादुपलखण्डान्तरं च व्रजद्भ्यामावाभ्यां प्रपातध्वन्यनुरण्यमानां सुभगां स्थलीमेकामागतं कथञ्चित् । अतो दृष्टाः पर्वतमाला उच्चतरत्वं भेजिरे । गन्धवहः सहसा शीतल आमोदमयश्च सञ्जातः । अत्रागते सति कस्माद्धेतोः विभीषिकापि मनसोऽपसृतेति मनसि कृत्वा यावदितस्ततो दृष्टिविस्तारमकरवं तावदपश्यं वामपार्श्वे स्थितं बृहदाकारं कृष्णवर्णं महाकच्छपसदृशं शिलाखण्डमेकम् । जलाशयान्निर्गतकच्छप इव प्रपातप्रसूतजलधारायाः सन्निधावेवातिष्ठदेतत् । तत्सन्निधानात् तु पुरोगामी मार्गोऽवरुद्धप्रायो बभूव । दूरादवलोकितं धूमराजिमूलं तावदत्र नावगतं परं साश्चर्यं दृष्टाः खल्वालवालाः केषांश्चित् पादपमूलानां समन्तात् ।

ऐतिह्यविन्नरेन्द्रस्त्वेतस्मिन् नितरां घोरे पार्वत्यप्रदेशे मानवहस्तप्रयोगं सम्भाव्योल्लासोद्रिक्तो जातः । 'स्थली खल्वेषोन्नतैः पर्वतशृङ्गैरस्ति परिवृता । अतिघोराऽरण्यानी चैनामाच्छादयति । भयावहा हिंस्रजन्तवोऽप्यत्र विचरन्ति । अथ कथं नु कश्चिज्जनोऽत्र कदाचिन्निवसितुमशक्ष्यन्नाम ?' इत्येवं मयि शङ्किते प्रत्यवदन्नरेन्द्रः —

'बन्धुवर ! अलमेवं विचार्य । एतादृशेष्वेव स्थलेषु किल प्रागैतिहासिका जना वासं चक्रुः । अस्त्यत्रैषानवरतप्रवाहिणी निर्झरिणी । अत्रत्या लतागुल्माः स्युर्नाम किमपि फलप्रदाः । मानवस्त्वस्ति पशूनामन्यतमः । विशेषतया वानरसन्निकृष्टोऽसौ । प्राक्कृषिपशुचारणप्रभृतिव्यवसायानां विकासादेतद्विधान्येव स्थलानि तेन निवासाय वृतानि स्युर्यत्र खलु हिंस्रपशुभ्योऽसौ सुरक्षितः स्यात्, अनायासं भोजनपानं लभेत्, ऋतुचक्रपरिक्रमणजन्यशैत्यातपवर्षोद्भूतव्यथाभ्यश्च परित्रा-

णम् । एतत्सर्वं त्वत्र प्रकृतिसिद्धमेव । पुराणेष्वपि स्मर्यत आद्यमानवजनको भगवान् मनुर्जलप्लावनावसरे हिमगिरिमेवैनमाशिश्रायेति । इतिहासग्रन्थेष्वपि पठ्यते यद् आदिमानवस्य वर्गविशेषो हिमालयमेवाध्युवास । तत एव प्रस्थायासौ शनैः शनैरशेषामपि भारतभूमिं व्यापयाञ्चकार । वेदर्षीणां हिमालयीयमभिज्ञानमपि सूचयति यदार्यजना हिमगिरिवासिन एवासन् । एतद्गिरिप्रसूतसप्तसिन्धुप्रवाह-पथिनिपतितविघ्नानामपसारणैवेन्द्रवृत्रसंघर्षाख्यानत्वं गता । एतासामेवानुतटं चलन्त आर्यजना निखिलमप्युत्तराखण्डं व्याप्नुवन्त इति भृशं सम्भाव्यते । अथार्य-जनपूर्वजा अप्येतादृशीषु निर्झरिणीनिर्मितदुर्गमासूपत्यकासु वासं चक्रुरिति चेन्मतं स्यात् तर्हि का विप्रतिपत्तिः ? यथा खलूपत्यकाभ्यो निस्सृत्य निस्सृत्या-न्योन्यैर्मिलित्वा च निर्झरिणीगतजलधारा गङ्गाप्रभृतिसरितां स्वरूपं धारयन्ति तथैवैताभ्य उपत्यकाभ्यो निस्सृत्य निस्सृत्यादिवासिनः पुरा सप्तसिन्धुप्रदेशं गताः स्युः ।'

आर्याणां हिमालयमूलत्वोपपादनरतो नरेन्द्रस्तावत् कालातिपातं प्रति ज्ञापितोऽपि सन्नवाप्ताप्रत्याशित इव एतावता न व्यरमत । निर्झरिणीतटाद्विकीर्णान् कांश्चित् पाषाणखण्डानादायावादीदसौ—

'पश्यतु तावद् भवानेव पाषाणखण्डेष्वेतेष्वाकृतिद्वैविध्यम् । एते तु सर्वथा समतलाः । अथैतेषां सुचिरजलप्रवाहप्रदत्तघर्षणाकारीकृतत्वं सुतरां स्पष्टमेव । इतरेषां तु कथैव भिन्ना । सप्रयोजनमुच्चावचं तेषु मानवहस्तन्यस्तं शिल्पं निदर्शयति । अवहितो भूत्वैनमेत्र खण्डमवलोकयतु भवान् । उपरिष्टात् त्वेषः स्थूलाकारोऽधस्ताच्चानुक्रमेण तनुतरतां भजते । कर्तनोपजातविन्दवस्त्वेतस्मिन् कर्तर्याः पाषाणमयत्वं सूचयन्ति । अथैतस्य पाषाणयुगीनत्वं सुतरां स्पष्टमेव । एतावता ज्ञायते यत् पाषाणकाले आदिमानवाः कृतवसतयोऽत्रेति । नैकसहस्रवर्ष-पूर्वं तैरत्र संघबद्धं निवसितं स्यादेतैः पाषाणशस्त्रैश्च वन्यपशवो हताः स्युः । पुनश्च नि[illegible]मुत्तुङ्गाः सन्त्यत्रत्याः पादपाः । दूरमारुह्यैतेषु हिंस्रपशुभ्य आत्म-रक्षा [illegible]त् । अथैते पादपास्तेषामापत्कालीननिवासभूताः स्युः । शीतात-[illegible]वारणाय त्वेतैर्भूमेरभ्यन्तरमपि निवसितं स्यात् । एतादृशो [illegible]वासस्तु पर्वतदरीष्वेवोपलभ्यः । यत्र क्वापि भूमेः स्खलनाच्छिलाखण्डस्याव-पाताज्जलप्रपातकर्तनाद्वा पर्वतो गह्वराकारः संवृत्तः स्यात् तत्र तैः काले काले कृतवासैर्भवितव्यम् । पृथिवीतले तु तैर्बद्धसंघैरेव निवसितं स्यादन्यथा हस्ति-सिंह-भल्लूक-शूकर-वृकप्रभृतिहिंस्रपशवस्तान् जीवक्षयं प्रापयेयुः । एषा स्थली चेदद्यैतावन्मात्रं हिंस्रपशुबहुला, का वार्ता पुनः पुराकालस्य ! हिंस्रजन्तुभीता एव

ते भूम्यभ्यन्तरनिवासिनो भवेयुः। सम्भाव्यत एतादृशो निवासस्त्वत्र बृहदाकाराणामेतद्विधानां पाषाणखण्डानामभ्यन्तरालेष्वपि। बन्धुवर! चिन्तयतु तावद् भवानेव कियत्कष्टबहुलं पौरुषापेक्षं चाभूदस्मत्पूर्वपुरुषजीवितम्। एतद्विधभयावहपरिस्थितावपि हिंस्रपशुभ्यः संरक्षिता परिवर्धिता विकासोन्मुखीकृता च मानवसन्ततिस्तैः। एतन्निमित्तमत्रत्याः सर्वेऽप्यस्मत्पूर्वजा वन्द्याः।'

उक्त्वैतन्निरां भावविह्वलोऽसौ हस्ताग्रौ सम्पुटीकृत्य श्रद्धयोपेतः 'स्मारं स्मारं वन्दे तान्' इति स्खलितकण्ठो जगाद। किञ्चिद्विरम्यात्मानं च स्थिरीकृत्य पुनरप्युवाच—'हिंस्रपशुव्यापादिताः केचित् प्रेतत्वं गता अद्याप्युपस्थिताः स्युरत्र वन्दनाशब्दमेनं श्रुत्वा चाप्यायिता भवेयुः। एतादृशवन्दनाशब्दः पूर्वतरमपि कदाचित् तेषां श्रुतिपथमागतो भवेदिति तावदकल्प्यम्। नितरां भयास्पदा ह्येषा स्थली। कः स्पृहयेद् व्याघ्रमुखावपाताय, चेदसावप्यावामिव दैवदुर्विपाकान्नास्ति पथभ्रष्टः। पथभ्रष्टता त्वेषा सम्प्रति सञ्जाता महते सौभगाय। सङ्कटापन्नैः किल बहवो विश्वविश्रुता आविष्काराः कृताः। लोकप्रसिद्धेषु स्थलेषु तावद् ये केऽपि गन्तुमर्हन्ति। शूरवीराः खलु ते ये कुचरे चरन्ति, अपदे पादं निक्षिपन्ति, अनाविष्कृतमाविष्कुर्वन्ति, अज्ञातं ज्ञापयन्ति, अकृतपूर्वं च सम्पादयन्ति।'

'अलमतिसाहसेन नरेन्द्र' इति तज्जल्पनामध्ये मय्युक्तवत्यपि पुनरसौ वक्तुं प्रारभत—'आशङ्क्यते मा खलु कश्चिद् व्याघ्रःसिंहोवाऽऽपतेन्निर्झरिणीजलं च विहायास्मच्छोणितमेव पातुं व्यवस्येत्। भगवान् भास्करो बलवत्प्रकाशते मध्याह्न एतस्मिन्। आतपक्लिष्टा हिंस्रजन्तव आगच्छेयुश्चेत्, उपसेचनमिश्रितौदनकल्पौ भविष्यावः। तथापि स्थलादस्मात् सहसापसरणमपि न रोचते। अन्तर्हृदि विश्वसिमि कश्चिदादिमानवोऽद्याप्यत्र निवसितुमर्हतीति। अहं तु सर्वथा तद्दिदृक्षुरस्मि। तदधिकृतानि कल्पनाप्रसूतानि विवरणानि तावद् भूरिशः पठितानि। परमद्यावधि दृष्टं किमपि न। संयोगवशात् समीचीने प्रदेश आगतोऽस्मि। इतिहासाध्ययनकृतश्रमस्य चरमफलावाप्तिसम्भावना बलवदवरुणद्धि मामत्र। विश्वसिमि, दुष्करे कर्मण्यस्मिन् भवानपि मत्साहाय्यं विधास्यति। भयाकुलो भवांश्चेत् तर्ह्यागच्छतु पादप एतस्मिन्नारुहाव। स्कन्धदेशमेनमाक्रमितुं व्याघ्रो वा सिंहोऽपि वा न शक्ष्यति। भल्लूकोऽपि कश्चिदारुरुक्षुर्भविष्यति चेत् तर्हि पोट्टलिकायामस्ति तत्प्रतीकारसाधनम्। अग्न्याधानार्चिर्हि तद्धृदि भयोत्पादनायास्त्यलम्।'

नरेन्द्रस्य दृढामभिरतिं विमृश्य दुस्साध्यमपि तत्प्रस्तावमस्वीकर्तुं नाशकम्। विकल्पोऽपि नासीत्। घोरारण्यसंच्छन्नाया एतस्या उपत्यकाया एकाकिनः

कस्यचिन्निस्सरणमपि तथैव दुष्करमासीद् यथा तत्रावस्थानम्। दिवाकरोऽप्येतावता कालेनास्तोन्मुखो बभूव। अनन्यगतिकत्वाद् वृक्षारोहणमात्रमेवावलम्बनीयं जातम्।

वृक्षारोहणकर्मणि नरेन्द्रस्त्वासीत् कुशलः, परं तस्यानिवार्यतां विमृश्य प्रकम्पितगात्रोऽहमभूम। किन्तु श्वापदभयसाम्मुख्ये प्रकम्पोऽपचितः। अथ नरेन्द्रमनुसरता मयाप्यारोहणाय प्रयतितं तावत्पर्यन्तं चारूढं यत्र खलु हिंस्रपशुभयमपगतम्।

'परन्तु किं नु खलु करणीयं स्याद् भवतानुसन्धित्सित आदिमानव एवाक्रमेच्चेत्' इत्येवं मया सशङ्कं पृष्टो नरेन्द्रो मामाश्वासयन्नुवाच—'आदिमानवस्तु मांसभक्ष्यासीत् परं नासीदसौ नरमांसभक्षी कथमपि। अन्यथापि तैर्नरसंहारशीलैर्न भवितव्यम्। मानवजिघांसा तावदहंकारोपबृंहणक्रमेणोद्दीप्ता सती क्वचित् साम्राज्यार्थमुद्भूता क्वचिद्धर्मप्रचारार्थं क्वचिच्च सम्पत्त्यर्थम्।' 'कामोऽप्येतस्मिन् व्यापारे न कथमप्यवरभूमिकः' इत्येवं मय्युक्तवति पुनर्वक्तुमारेभे नरेन्द्रः—'मानवेतिह्ये कामेन खलु महती भूमिका निर्वाहितेत्यत्र नास्ति कोऽपि सन्देहः। जगति बहवः संग्रामाः नारिनिमित्तमेवोपजाताः। अद्यापि ग्रामे ग्रामे नगरे नगरे च स्त्रीपुरुषसम्बन्धविकृतिः प्रायशो नरसंहारे परिणमते। परं कामोऽप्यहंकारानुवर्ती। अहंकार एव क्वचित् कामरूपेणात्मानमाविर्भावयति क्वचिच्च लिप्सारूपेण। एतयोरेवानभिपूर्तिः क्रोधं जनयति, क्रोधश्च संहारम्। अहंकारः पुनरस्तित्वमूलो भवति, अस्तित्वं च त्रैकालिकं सार्वदेशीयञ्च। तत्प्रेरणावशान्मानवः शरीरं रक्षति, सन्तति रक्षति, इतिहासं च रक्षति, सम्पत्तिमुपचिनोति, गृहं निर्माति, साम्राज्यं च स्थापयति। संशयापन्नास्तित्वो जन उद्दीप्ताहंकारः सन् क्रोधमाश्रयते जनसंहारे च प्रवर्तते। आवां त्वादिमानवानां सन्तानपरम्परामेव प्रतनुव। अथ किमर्थं ते आवां हन्तुं प्रवर्तेरन्। आवां दृष्ट्वा तु त उल्लसितानना एव भवेयुः। सुचिरकालानन्तरं लब्धसन्ततिः कश्चिद्धर्षोन्मत्तः किं न स्यात्?'

नरेन्द्र एवमुक्तवति मन्मुखान्निस्सृतम्—'असन्देहं न सन्ति ते भवत्सदृशैतिह्यविदो यथाभिजानीयुरस्मद्विधा जनाः तत्सन्ततिरिति। सादृश्यमप्यस्मासु स्वकीयमवगच्छेयुश्चेत् ते, तदपि महते हिताय स्यात्।'

'बन्धुवर! अलमेतावते'त्युवाच नरेन्द्रः—'एतावन्मात्रेणापि कृतार्थौ भविष्यावः। दृष्टसाम्यलेशा अपि त आवयोरात्मीयत्वमनुभविष्यन्ति। पशुव-

ज्जीविनोऽपि ते पशोर्मानवस्य च मध्ये विभेदं कुर्युरेव। अधस्तात् तु पशून् दृष्ट्वोपरिष्टाच्च पादपारूढावावां, स्वकीयं बन्धुत्वमेवानुभवेयुस्त आवयोः। अथ कः खल्वकारणं बन्धुवधायोत्सहेत ? वीतचिन्तो भवतु भवान्। अकारणमारणवृत्तयस्तु भवन्ति वर्धिताहंकारा जनाः, न तु जीवननिर्वाहमात्रपरा ऋजुमनोवृत्तयोऽवदातचरिताश्चास्मत्पूर्वजाः।'

एवं परस्परमालपद्भ्यामावाभ्यां पादपस्यैकस्मिन्नुत्तुङ्गे स्कन्धदेशे नैशावासाय सुदृढमवस्थितम्। नरेन्द्रश्च पोट्टलिकामदूरस्थया शाखयैकयावलम्बयति स्म।

  

अथ घटीयन्त्रेण पञ्चवादनकालः सूचितः। शिखराणामत्युत्तुङ्गत्वाद्दिवाकरः सम्प्रत्येवास्तोन्मुखो जातः। सायंकालीनया छायया सह वायुमण्डलं शैत्यं भेजे। आकाशः कृष्णात् कृष्णतरत्वमभिगन्तुमुपचक्रमे। उड्डीयमानाः खगास्तस्य नीरवतामपाचक्रुः। यथा यथा सान्ध्यकालः सन्निकृष्टस्तथा तथा निर्झरिणीनादः स्फुटतरो बभूव। जलप्रवाहोद्भूतः कलकलध्वनिः कर्णावतर्पयत्। पक्षिणां कलरवः, प्रपातस्य झर्झरः, वायोःसरसरः, शुष्कपत्राणां खडखड इत्यादिव्यापाराः प्रकृतिसन्देशवाहका इव संवृत्ताः। तेषां मुखेन सा किञ्चिद् गुह्यं न्यवेदयदिव। यथा यथा कालोऽतिगतः तथा तथा सन्देशो गभीरतरत्वमवाप। यस्यां कस्यामपि दिशि कश्चिद् ध्वनिरजायत चेत्, दृष्टिस्तदुन्मुख्यभवत्। किमर्थम् ? कश्चिदवांछितो जन्तुर्नापतेत्, कश्चिच्छरीरबद्ध इतिहासो वा समागच्छेदिति।

एवमवांछितनिवारणपरा वांछितप्रतीक्षणनिर्भरा च चित्तवृत्तिराशाऽऽशङ्कयोर्मध्येऽनुक्षणमान्दोलितवती। 'आदिमानवः तत्समूहो वा सहसाऽऽगमिष्यति चेत् तर्हि किं करिष्यावहे ? अशेषोऽपि परिवेशः सम्प्रति नैशान्धकारकवलितः। सर्वलोपकारिणं तिमिरं भित्त्वा पशुमानुषविवेककारिणी प्रज्ञा कथं प्रवर्तिष्यते ? प्रागैतिहासिकमानवदिदृक्षू आवां तिमिरेण स्वत एव प्रागैतिहासिके युगे प्रहितौ स्वो यत्र तावत् पशुमानुषयोर्मध्ये प्रायशो विवेक एव न जातः।'

इत्येवं मयि साशङ्कमुक्तवति प्रत्यवदन्नरेन्द्रः—'अलमनया चिन्तया। अस्ति मदीयपोट्टलिकायामेका चौरवर्तिका। तत्साहाय्येन खलु दर्शनीयं द्रष्टुं शक्ष्यावः। आगच्छतु तावदसौ। अहं तु तन्निबद्धमानसस्तमेव प्रतीक्षमाणस्तिष्ठामि। ममाधन्यतयैतावता कालेनाप्यसौ नागतः। तद्भयापन्नतामेव विमृश्याहं न

प्रयुनज्मि, चौरवर्तिकामेनाम् । वन्यपशुमध्ये निस्त्राणं प्रतिवसन्नसौ प्रकृत्यैव शङ्कालुः स्यात् । सामर्थ्यहीनता खलु संशयमुपजनयति ।'

  

एवं परस्परमालपतोरावयोर्निविडतिमिराच्छन्ना रात्रिः कलानुकलमत्यगच्छत् । निखिलोऽपि जागतिको बोधः प्रलयोन्मुखो बभूव । अनवरतमुत्पद्यमानो हिंस्रपशुरवः प्रतीतिमेनामेव पुपोष । निर्झरिण्याः कलकलध्वनिः कालदेवस्य पादाहतिरिवानुक्षणं श्रुतिपथमागतः । प्रपातध्वनेस्तीव्रत्वादस्मद्वार्तालापोऽपि कष्टश्रव्योऽभूत् । 'अस्मत्पूर्वजोऽत्रागत्य वंशप्रीत्या नामग्राहमप्याह्वयेच्चेत् तदाप्यसौ न तु दृष्टः स्यान्नैव श्रुत' इति यावन्मन्मुखान्निस्सरति तावत् सहसोत्तरदिशो प्रपातध्वनिबाधितोऽपि 'घुर्घुरि' ति तुमुलो रवः श्रुतिविषयतां गतः । सावधानेन मया रवानुसारिदृष्टिः प्रसारिता । नरेन्द्रः सन्नद्धतरोऽभवत् । दत्तावधानेनापि मया निविडान्धकारव्यतिरिक्तं किञ्चिदपि द्रष्टुं न पारितम् । शनैश्शनैर्घुर्घुरिति रवः स्फुटतरत्वं भेजे । नरेन्द्र आशान्वितोऽभूदहञ्च संशयापन्नतरः । 'आदिमानवाः खलु सङ्घबद्धा एव प्रचलेयुरि' त्यसावमन्त्रयत । 'मा तावत्, पशवोऽपि सङ्घप्रिया भवन्ती' त्यसौ तथैव प्रत्युक्तः ।

एतदेवाभ्यन्तरे सङ्घोऽसावस्मदारूढपादपस्याधस्तादागतः । 'एते तु तिर्यञ्च इव लक्ष्यन्त' इति सनिश्वासोऽवादीन्नरेन्द्रः । न केवलं तिर्यञ्चः, यत्सत्यं त्वेते भल्लूका इति मन्मुखात् सहसा निर्गतम् । 'तूष्णीमेव तिष्ठ । मा तावदस्मदुपस्थितिस्तेषां विदिता स्यात् । चौरवर्तिकापि न प्रज्वालनीया । को नाम सङ्घस्यैतस्याक्रमणं प्रतिकर्तुं शक्ष्यती' ति यावद् वदाम्येव तावन्निविडान्धकाराभ्यन्तरतो लघ्वाकार ईषत्पीतवर्णो ज्योतिष्पुञ्जोऽस्मदुन्मुखो दृष्टः । अथ केचिज् जन्तवः सत्वरं वृक्षमूलमागत्य सस्वरमाघ्राय च समन्तत आरोढुमुपचक्रमुः ।

'सम्प्रति किं कुर्याव ? महद्भयं समुपस्थितमि' ति ससम्भ्रममवोचन्नरेन्द्रः । 'अलं भ न । चौरवर्तिकां तावत्प्रज्वालये' ति निर्दिशन् तमुच्चैर्मया 'हाहे'ति रव उत्पादितः । चौरवर्तिकायां प्रज्वालितायामेवाग्निभीत्या भूमिस्थैः सर्वैरपि भल्लूकैः सद्य एव पलायितम् । ये तावत् पादपाधिरूढा आसन् तेऽप्यन्योन्यस्योपरि निपतन्तोऽविलम्बमुत्थाय चापचक्रमुः । जिजीविषा खलु बुभुक्षाया बलवत्तरा ।

निर्विघ्नापि सती भल्लूकघटना भृशमातङ्कमजनयत् । भयकारणेऽपगतेऽपि प्राकम्पत हस्तपादम् । यात्रार्जितमाह्लादजातमेकपद एवापगतम् । 'को लाभ

आदिमानवदर्शनेन ? जीवन्निवर्तनमेव वरमि' ति कातरस्वरेण मया सन्त्रितम् । इदानीं नरेन्द्रोऽपि सहमति व्यानक् ।

परं को नु ज्ञातुं शक्नुयाद् यदावां सम्प्रत्यादिमानवदर्शनानपेक्षाविति ? भल्लूकापसारणक्रमेणास्मत्कृतहाहाकाराकृष्टैर्बिडालवत्पिङ्गचक्षुषोर्ध्वमालोकयद्भिर्हाऊहाविति हृदयविदारकरवोत्पादयद्भिः कैश्चिज्जन्तुभिस्तावत् कतिपयक्षणानन्तरमेव पादपमूलमुपागतम् । 'बन्धुवर ! किं करणीयमिदानीम् । व्याघ्राः खल्वेत' इति वेपमानेन नरेन्द्रेण मत्कर्णान्तिकमभिमन्त्रितम् । 'अलं भयेन । एतेषां कूर्दनक्षमतायाः सुतरामूर्ध्वमास्थितौ स्वः । आतङ्कवशादूर्ध्वतरमारोढुं मा प्रयतस्व । आरोहणकर्मणि सम्प्रत्यवपातस्य भूयस्याशङ्के'ति मद्वचनान्नरेन्द्रस्तथैवास्थात् । व्याघ्रैस्त्वभ्यवहारं स्वकीयं भूमौ पातयितुं भूयो भूयो गर्जितम् आवाभ्यां च वेपमानाभ्यामपि पादपशाखा दृढमाबद्धा हस्ताग्राभ्याम् ।

यावद् व्याघ्रा आवामवपातयितुं विविधमचेष्टन्त तावत् पुरोवर्तिपर्वतशिखरयोर्मध्यात् तमोमयीं जवनिकामपसार्य भगवान् कुमुदरञ्जनश्शनैश्शनैराविर्बभूव । यावदेकत्र चन्द्रशेखरभालस्थसुधाकरशकलस्वरूपेणोद्यता तेन निशायाः क्षीणप्रायस्त्वं सूचितं तावदन्यत्र वृक्षमूलस्थानामस्मदाकांक्षिणां भीषणत्वं भृशमुपचितम् । अन्योन्यमर्दनपूर्वकमहमहमिकया विकरालानि मुखान्युद्घाटयास्मदुन्मुखं कूर्दन्तो गर्जन्तश्च ते सम्प्रत्यपि तत्रैवातिष्ठन् । ततो नातिदूरस्थे पादपेऽन्यस्मिन् नैकविटपावलग्ना वानरा अपि दृष्टिपथमायाता एतदभ्यन्तरे । तदधस्तात् त्वेकोऽपि व्याघ्रो न दृष्टः । वानरं विहाय नरं प्रत्येतेषामेतादृशीं जिघांसां विमृश्य मनसि दृढीभूतं कश्चिन्मानवस्तत्र कथं जीवितुं शक्नुयादिति । 'नरमांसलुब्धैरेतैर्व्याघ्रैरेवादिमानवोऽत्र बिलोपितः स्यादि' त्युक्तं सनिश्श्वासं विषण्णेन नरेन्द्रेण ।

एतदेवाभ्यन्तरे चन्द्रोदयस्थलादेवोज्जगाम हिरण्मयं ज्योतिरेकम् । तमश्चापसरणं प्रारभत । एतेनैव सहास्मदीया जिजीविषापि पुनरुज्जीविता । दक्षिणाशायां खेचरकलरवः श्रुतः । सहसा तत्रैव विनियोजितदृष्टिरपश्यमेकं पुञ्जीभूततमस्स्वरूपं करैरितस्ततो विटपसंहरणपुरस्सरं शुण्डैश्शुण्डं मेलयन्तं दन्तैर्दन्तमवघट्टयन्तं पार्श्वैः पार्श्वं घर्षयन्तं कालसैन्यमिवाक्रमन्तं कालदिङ्मुखान्निष्पतन्तं बृहद्वन्यगजयूथम् । दृष्ट्वैनं पुनरपि संशयापन्नमस्मज्जीवितम् । 'एते दन्तिनो नन्वित एवाभिवर्तन्ते । बृहदाकारास्त्वेते । शुण्डानि प्रसार्यैत आवां ग्रहीतुं शक्नुवन्ति । अथोर्ध्वतरमारोहितव्यम् । त्वरतामि' ति ससम्भ्रमं नरेन्द्रेण निवेदितम् । 'अलमतिभयेन । यथावत् तिष्ठ । अस्मान् स्प्रष्टुमपि

नार्हन्त्येतै' इति यावन्नरेन्द्रमाश्वासयं तावद् गजयूथो नितरां सन्निकृष्टः। यूथं दृष्ट्वैनं व्याघ्रैरसमत्तो दृष्टीरपसार्य तदभिमुखीभूय व्यात्ततरैर्मुखैर्गर्जयित्वा तदाक्रमणविभीषिकां चासहद्भिरेकैकं ततोऽपसृतम्। गजैश्चापि व्याघ्राक्रमणमाशङ्कमानैः सुदूरमुत्तराशायामनुनिर्झरिणीं प्रक्रान्तम्।

  

एतस्मिन्नेवान्तराले उद्भासिताखिलद्यावापृथिवीमण्डलः पुरस्कृतमरीचिजालो भगवान् भास्कर उपत्यकाभ्यन्तरत उद्गम्य नगोत्तममधिरूढः। पुञ्जीभूय तमोराशिः क्वान्तर्हित इति नावगतम्। तमसैव सह हिंस्रपशवोऽपि दृष्टिपथादपसृताः। ज्योतिषः साम्राज्य एतस्मिन् पक्षिणः कदाचिन्नभस्युड्डीयमाना दृष्टाः कदाचिच्च पादपेषु कलरवं कुर्वाणाः श्रुताः।

'विभीषिकापसृता। वृक्षादवरोहितव्यं सम्प्रती'ति मया निवेदिते 'नेदानीम्। सम्प्रत्यपि कश्चिद् व्याघ्रो भल्लूको वा लतागुल्मावच्छन्नस्तिष्ठेत् क्वचित् प्राप्तावसरश्चाक्रमेत। अथ यावल्लतागुल्मा अपि प्रकाशिताः न स्युस्तावदत्रैव स्थातव्यम्। दुर्वृत्तय इव पशवोऽप्याक्रमणावसरं प्रतीक्षन्ते' इति नरेन्द्रेण शिरश्चालनपूर्वकमभिमन्त्रितम्।

'आम्। नास्ति काचित् त्वरा। एतादृशी भयावहा रात्रिश्चेदतिवाहिता, तर्हि होरान्तरमपि व्यतिगमयितुं शक्यत एव। पश्य तावत् कीदृश आमोदभरान्वितो वातः प्रवहति, कियान्नयनाभिरामो नगाग्रः काशते! हरिताम्बरधरा असितालकालङ्कृतशिरोधरा ललितकरकन्दुकक्रीडाभिरता जना इव शोभन्ते सम्प्रत्युदीयमानसूर्यबिम्बसान्निध्येऽवस्थिता हिमवच्छृङ्गाः। नीलाम्बराच्छन्ने पर्वतकमालानिष्पादितोच्चावचपीठिके खगवृन्दरवप्रस्तूयमानप्रोत्साहनशब्दे पादपप्रदत्तापरिमितप्रसूनोपहारे बृहदायामे क्रीडामण्डप एतस्मिन्नस्मद्व्यतिरिक्तं बहूनामितरेषां दर्शकानां सद्भावः स्यात्।'

एवमदृष्टपूर्वं हैमवतं दृश्यमवलोकयतोरावयोस्तावन्मात्रं कालमतिगतं यथा घर्मप्रसाराद्धिंस्रपशुभयं सुतरामपचितम्। अथ पादपादवतीर्य साशङ्कं गुल्मान् विलोकयद्भ्यामावाभ्यां निवर्तनाय सङ्कल्पितम्। परं केन मार्गेण निर्गच्छेव? प्रशस्तः पन्थास्तु कोऽपि नासीत् तत्र। यः कोऽपि मार्गो दृष्टिपथमायातः स तु निर्झरिण्यभिमुख उपलक्षितः। अथैकेन गुल्मान्तरालेन यावदभीष्टदिशि किञ्चिद्दूरं प्रचलितं तावन्निर्झरिणीतटस्थो बृहदाकारोऽसौ शैलखण्डः पुनरपि समागतः। शैलखण्डस्तु पार्श्वैकव्यतिरिक्तं समन्तात् कण्टकाकीर्णगुल्मो-

पगूढ आसीत् । केवलं निर्झरिणीतटमेवासीद् गमनार्हम् । परं तदप्यासीन्नितरां सङ्कीर्णम् । एकतो दुरारोहः शैलखण्डोऽन्यतश्च गभीरगह्वराभ्यन्तरत्रिष्यन्दमाना निर्झरिणी ! प्रस्थानमप्यासीदपरिहार्यम् । अथानन्यगतिकत्वात् तेनैव सङ्कीर्णेन मार्गेण प्रक्रमणं प्रारब्धमुभाभ्याम् ।

यावत् कतिचिदेव पदानि प्रक्रान्तानि तावदग्रे गच्छता मया वामपार्श्वे शैलखण्डमूले दृष्टं गुहामुखमेकम् । दृष्ट्वा तु तदभूवं स्तब्धः । नरेन्द्रोऽप्यातङ्कितोऽभूत् । 'किं नु खलु स्यादेतदि'ति सभयं मय्युक्तवत्यभिमन्त्रितं तेन शनैः 'कस्यचिद् व्याघ्रस्य भल्लूकस्य वराहस्य वृकस्याजगरस्य वा स्यादेतद्बिलम् । सत्वरं निर्वतितव्यं सम्प्रति । पुरस्ताद् गमनं न स्यान्निर्बाधम्, हिंस्रसत्त्वस्तु कश्चिदेतदभ्यन्तर्गतः स्यादिदानीमपि । निस्स्वनं निवर्तनीयमि'ति ।

श्रुत्वैतदेकपद एव निखिलमपि नैशं दृश्यं मनःपटले पुनरावृत्तम्—आवर्तमानो भल्लूकसङ्घो विस्फारितमुखो विकरालदंष्ट्रो व्याघ्रसमुदायश्च । मुखभागाद् दृष्टिगतं गुहाभ्यन्तर्गतं तिमिरं भल्लूकशरीरमिवादर्शि गुहामुखं च निर्दंष्ट्रं व्याघ्रमुखमिव ।

'किं करवाव ? निवर्तनमेव वरमि' त्युक्त्वा यावत् पश्चाभिमुखोऽभूवं तावन् सविस्मयमश्रृणवं गुहामुखान्निस्सरन्तं 'मा बिभेहि, आ गच्छे'ति नितरां मधुरं स्निग्धं कारुण्याप्लावितं वाक्यद्वयम् । 'को न्वत्रैवं वदेत् ? ध्रुवं वन्यपशवावार एषः । परं वाणी त्वस्ति मानवीये'ति यावन्मन्मुखान्निर्गतं तावन्नरेन्द्रेणैकपद एव निगदितम्—'बन्धुवर ! आदिमानवः स्यादि'ति । 'कथं न्वेतत् स्यात् ? भाषा त्वियं न कथमप्यादिमानवीया । सर्वथेदन्तनीयेयमि'ति मयापि प्रत्युक्तम् । मयि वचनान्निर्वर्तित एव गुहागतेन सत्त्वेन पुनरप्यामन्त्रणापदमुच्चारितम्—'अलं भयेन; आगच्छतमि'ति ।

परिस्थितिस्तावन्नितरामातङ्कमय्यासीत् । 'भयावहा मानववसतेः सुदूरस्था चेयं स्थली । हिंस्रप्रायजन्तुव्यतिरिक्तं नास्त्यत्र कस्यचिदितरस्य निवासचिह्नम् । एषा गुहा चास्ति निविडान्धकाराच्छन्ना । एतत्प्रवेशद्वारं चास्ति नितरां सङ्कीर्णम् । कः खल्वत्र निवसितुं शक्नुयाद्दृत आदिमानवात् । परं गुहामुखान्निसृता भाषा नास्ति कथमप्यादिमानवीया । अपि नाम छद्मवेशिना केनचिन्मायाऽत्र प्रसारिता । परन्तु कश्चिल्लुण्ठकोऽप्यत्र निवसितुं नोत्सहेत का वार्ता पुनः सत्पुरुषस्य । यत्सत्यं किमर्थमसावप्यत्र निवसेत् ? नास्त्यत्र लुण्ठनाय किञ्चित् । स्वागतशब्दस्तु पुनः स्नेहसौजन्यमयः । सज्जनश्चेत्, को नु खल्वसौ

स्या देतादृशदुर्गमस्थलकृतनिवासः ?' इत्येवमनेकशो निमृशद्भ्यामावाभ्यां विनिश्चितमन्ततो 'यद्वा तद्वा भवतु, वस्तुस्थितिस्तावदनुसन्धानार्हे'ति ।

एवं विनिश्चित्योभाभ्यामावाभ्यां साहसपूर्वकं गुहासमीपमागत्यावधानतया तन्मुखे ऽवलोकितम् । अथ पुनरपि स्वागतशब्दः श्रुतः 'आगच्छतमि'ति । तच्छ्रुत्वा किमप्यपगतभयाभ्यामावाभ्यां प्रवेशाय प्रक्रान्तम् । अहं तावदग्र आसं नरेन्द्रश्च मम पृष्ठदेशे । गुहामुखं त्वासीदनतिस्थूलमानवशरीरपरिमाणकम् ।

ईषदवनम्य सायासमवलोकिते सत्यन्धे तमसीव दृष्टिगतानि सोपानमार्गस्य कानिचित्पदानि । नरेन्द्रेणानुगम्यमानश्शनैश्शनैः पञ्च षड् वा पदानि प्रक्रम्यापश्यं तमस्येव विराजमानमस्मत्सदृशसामान्यवेशधारिणं जनमेकम् । 'किमेष एव गुहास्वामी ? किमर्थं सामान्यजीवी जन एष एतादृशे कष्टमये स्थल एकाक्येव निवसती'ति मनस्युदपद्यत । गुहापि प्रथमे कल्पे पञ्चषड्हस्तपरिमितायामिनीव प्रत्यभात् । परं यथा यथा दृष्टिस्तिमिराभ्यस्ता जाता तथा तथा गुहापि विस्तारं भेजे ।

अथ तज्जननिर्दिष्टे स्थल उपविश्य शनैश्शनैरभ्यासविस्तारितदृष्टिर्यावदग्रतोऽलोकयं तावत् किञ्चिद्दूरेऽपश्यं बद्धसिद्धासनं रज्जुमेखलामात्रपरिधानं भूतिविलिप्तसर्वाङ्गमृजुपृष्ठवंशं शाम्भवीमुद्रानियोजितनेत्रयुगलमद्भुतज्योतिर्मयदृष्टिमात्मप्रकाशविच्छुरिताननं प्रलम्बजटाजूटशिरस्कं तमसाच्छन्नमपि दीप्यमानभालं दीप्तिमन्तमपि शान्तिमूर्तिमेकाकिनमप्यनपेक्षितजनान्तरसाहचर्यमकिञ्चनमप्युपभुक्ताशेषवैभवं निमीलितनेत्रमपि सर्वदर्शनसमर्थमदत्तपरिचयमपि सर्वपरिचितं हिंस्रजन्तुमध्यकृतनिवासमपि कारुण्याप्लावितमसहायमप्याश्वस्तमनोवृत्तिमसाधनमपि नितरां तुष्टं जगन्निवासमपि जगदतीतं भयाक्रान्तमपि निर्भयं व्याघ्रचर्मावस्थितमपि निरहंकारं कष्टजीवितमप्यानन्दोद्रिक्तमात्मदीपमात्मरतिमाप्तकाममात्मानन्दं साक्षाच्छिवकल्पं योगिवर्यम् । भालावलिप्तं त्रिपुण्ड्रं पार्श्वास्थितं त्रिशूलं च दृष्ट्वा मनसि जातं ताण्डवपरिश्रान्तशिव एव विश्रमायात्रागतोऽथवा नीलकण्ठधामस्थप्रपात—जलधारया समानीतः स्वयं भगवान्नीलकण्ठ एव विराजतेऽत्रेति ।

महात्मना सह वार्तालापस्यानवसरमवगत्य पार्श्वस्थं जनमेव मन्दं मन्दमपृच्छम् —'कदा प्रभृति महात्मैषोऽवस्थितोऽत्र ?'

'विगतविंशतिवर्षेभ्य एष कृतवसतिरत्र श्रूयते ।'

'का त्वत्रभवत आहारव्यवस्था ?'

'वन्यफलव्यतिरिक्तं न काप्यन्या ।'

'किं कुरुतेऽसावत्र ?'

'न किञ्चिदपि । पञ्चदशवर्षीयो मम परिचयोऽनेन महादमुना सह । यदाप्यागच्छाम्येवमेवैनं पश्यामि । यदाप्यागच्छामि होरात्रयपर्यन्तमेतस्य सन्निधावुपविशामि । सर्वथैकासनबद्धस्तिष्ठत्येषः ।'

'किं कदाचित् किमपि वदत्यप्यसौ ?'

'न किमपि । बहुधा जिज्ञास्यमानोऽयं कदाचिद्धस्ताभ्यां कदाचिच्च मुखमुद्रया किमपि सूचयति ।'

'धाष्टर्याय क्षन्तव्योऽहं कृपया । जिज्ञासा तु मां पुनरपि किञ्चित् प्रष्टुमुत्प्रेरयति । अपि किञ्चिद्वैचित्र्यमनुभूतं भवतैनं महात्मानमधिकृत्य ?'

'श्रीमन् ! वैचित्र्यं त्वस्ति । यत्किञ्चिदप्यसौ निर्दिशति तत्सर्वं याथार्थ्यं भजते । कदा वर्षा भविष्यति, कदा च हिमपातः, रुग्णो जनः कश्चित् कदा स्वास्थ्यं लप्स्यते, मात्रा प्रतीक्षितः पुत्रः कदा गृहं प्रतिनिर्वर्तिष्यति, कस्यचिल्लुप्तः पशुविशेषः प्राप्स्यते न वेत्यादिसमस्याः काले काले महात्मनोऽस्य समक्षमुपस्थापिताः सम्यक्प्रकारेण समाधीयन्ते । परमेतत्सर्वं त्वानुषङ्गिकमात्रमस्ति । अत्रभवतः सिद्धिस्तावत् सिन्धुरिव गभीरा, आकाश इव सर्वतोगामिनी, तारक इवोत्तुङ्गा, जलमिव शान्तिप्रदायिनी, पृथिवीव च दृढा । सान्निध्यमात्रादस्य तादृशी शान्तिर्लभ्यते यादृशी कुतश्चिदपि लब्धुं न शक्यते । का वार्ता मानवस्य, हिंस्रजन्तवोऽप्यस्य सन्निकर्षेणाहिंसकाः संवृत्ताः । एष प्रदेशो भृशं हिंस्रपश्वाकुलः । परमेष महात्माऽद्वितीयस्तिष्ठत्यत्र । उपरिष्टान्मार्गेऽस्मिन् रात्रौ भल्लूका अपि विचरन्ति, व्याघ्रा अपि, सिंहा अपि, गजा अपि । परं कोऽपि महात्मानमेनं न जिघांसति । भुजङ्गा अजगराश्च यदा कदा गुहायामेतस्यां महात्मानमुपसर्पन्ति तत्सान्निध्ये यावदिच्छं तिष्ठन्ति स्वेच्छया च तस्मादपसर्पन्ति । अहं त्वात्मान पुण्यकर्माणं गणयामि यत् काले कालेऽस्य सान्निध्यमवाप्नोमि ?'

'कुतश्चिदयमत्रागतः स्यात् ? अपि भवानेतदधिकृत्य किञ्चिज्जानाति ?'

'यत्सत्यं न किमपि । परं प्रतीयते यदेष जन्मनाभिजातः सम्पन्नकुलोद्भवोऽनुभूतवैभवः पारङ्गतानेकविद्योऽभिज्ञविविधविचारसरणिर्लब्धप्रतिष्ठश्च ।' श्रुत्वैतन्मदीया जिज्ञासा तीव्रतरा सञ्जाता । 'परं कः प्रशमयेत् ताम् ? जनस्त्वयमेतावन्मात्रमेव जानाति । महात्मा च स्वयमेव किमपि न वदति । कं पृच्छेयम् ?' इत्येवं विमृशन् जिज्ञासापूर्णेन चक्षुषा यदा तन्नेत्रे अपश्यं तदाऽलोकयं

तत्र रहस्यमयं हास्यमभिव्यज्यमानम् । मनसि सहसा जातं 'कदाचित् पूर्वपरिचितोऽयमि' ति । 'परं कथं न्वेतत् सम्भवेत् ? प्राणिष्वन्योन्यसादृश्यं तु प्राय एव दृश्यते । सम्भाव्यते यदेतादृशः कश्चिज्जनान्तरोऽन्यत्र क्वचिन्मया दृष्टः । आकारसादृश्यात् तमेव महात्मन्येतस्मिन्नाक्षिप्य तदात्मकत्वेनैनमवलोकयामि । तथापि महात्मा त्वेष पूर्वपरिचित इव प्रतीयते । परं कथं कुत्र केन रूपेणेत्यवधारयितुं न पारयामि । एष तु नैव किमपि वदति न च वक्ष्यति । अथवा सर्वथाऽपरिचित एवासौ । मिथ्यैवैतस्मिन्नात्मीयत्वं पश्याम्यहम् । परं किमर्थं मय्येव विशेषदृष्टिरसौ ? नरेन्द्रोऽप्यस्ति मया सार्धमागतोऽत्र । उन्मुखीभूतोऽप्येष एनमुदासीन इव पश्यति । सम्भाव्यते यदैतिह्यान्वेषको नरेन्द्रो महात्मन्यप्येतस्मिन्नादिमानवावशेषदिदृक्षुर्जातो यच्चान्तर्ज्ञानवतानेनाभिज्ञातम् । अहं तु सश्रद्धोऽस्म्येनं प्रति । परं महात्मनो दृशि कः सश्रद्धः कश्चाश्रद्धः ? स हि समदृष्टिः श्रुतः । शत्रुमपि मित्रवत् पश्यत्यसौ । पुनश्चैतस्मिन्नादिमानवत्वदर्शनमपि नास्ति कथञ्चित् श्रद्धाशून्यत्वनिदर्शकम् । आदिमानवश्चेद् घृणास्पदः स्यादेतस्य दृशि तर्हि वैभवसम्पन्नां नागरजीवनपद्धतिं विसृज्यासौ किमर्थमादिमानववन्निवसेदत्रे' ति ।

एवं मयि विचारमग्ने सति नरेन्द्रो जनेन तेन सार्धं विविधं वार्तालापरतोऽभूत् । कालातिपातमनुभूय निवर्तनोपक्रमायासौ मया प्रतिबोधितः । मनसि त्वभूदत्रैव स्थित्वा दुर्लभदर्शनस्य महात्मनोऽस्य जीवनदर्शनमवगच्छेयमिति । परं नासीदस्मत्सदृशस्य जनस्य कस्यचिन्निवासाय सौविध्यं तत्र । भोजनं विनाऽस्मत्सदृशा जनाः कथं क्वचिन्निवसेयुः ?

अथ नरेन्द्राय प्रस्थानसङ्केतं दत्वा पादस्पर्शाय नताननो यावन्महात्मानमुपाक्रामं तावत् स्मितिविच्छुरिताननोऽसौ हस्तयोः साहाय्येन झटिति पृष्ठदेशेऽपसृतः । आश्चर्यचकितस्य मम मनस्युदभूत् 'किं कारणं स्यादपसरणस्य ? अपि मदीयं शिरः तत्पादस्यापि स्पर्शं नार्हति ?' रहस्योद्वेलितेन मया दूरादेव सादरं प्रणम्य तं गुहाया बहिर्निर्गतम् । नरेन्द्रेणापि तथैव कृत्वा मामनुगतम् ।

  

बहिरागते सति समग्रोऽपि परिवेशो द्युतिमत्तरोऽलक्ष्यत । घर्मस्तीव्रतरः संवृत्तः । निर्झरिणीस्वनः श्रुतिपुटमपूरयत् । दृष्टिर्मनोहारिगिर्यध्यूढहरीतिमावनद्धा जाता । घ्राणः सुमनामोदनिर्भरो बभूव । मनश्च निवर्तनमार्गानुसन्धानपरमभूत् । 'ननु केन पथा गन्तव्यमि' ति मया पृष्टो नरेन्द्रः समन्तादवलोक्यावदत्

'मार्गान्तरस्तावदविदितदिक्। न जाने क्वासौ नयेत। अथानुनिर्झरिणीतटमेव गमनं निर्बाधं प्रतीयते। सा तावद् गङ्गोन्मुख्येव प्रवहेत्। अस्मत्पूर्वजा आदिमानवा अप्येतादृशेनैव पथा गताः स्युः। तत्तटेन गच्छता हि जलं प्राप्यते, फलानि लभ्यन्ते, मृगयावसरं चावाप्तुं शक्यते। मन्ये, अनेनैव पथा ते सर्वेऽपि समतलभूमिं गताः स्युः। एतस्मादेव कारणात् तेषामेकोऽपि न मिलितः।'

'एकस्तु मिलित एवे' ति मय्युक्तवति स्मिताननोऽसौ प्रत्यवदत्—'सत्यं तु मिलित एव। न जाने जनस्यैतस्य मनसि किमजायत यन्मनोरमं नागरमावासं विहायैष एतादृशीं भयावहां स्थलीमागतः? को नु विचारशीलो जनः स्वेच्छयात्र निवसितुमुपक्रमिष्यति? अभ्यस्तवन्यजीवना आदिमानवा अपि मार्गानुसन्धानानन्तरमेवातो निर्जग्मुः। यादृशः खलु निवासस्तेभ्योऽपि न रुरुचे तस्मिन्नेवायं जनः सम्प्रति कृतवासः। मन्ये, या गुहा तैरपि परित्यक्ता सैवानेन निवासाय वृता। विचित्राः खलु मनोवृत्तयो भवन्ति जनानाम्। को न्वेनं बोधयितुं पारयेत् यदेषा कष्टमयी सरणिः परित्याज्या सामान्या सुखावहा जीवनपद्धतिश्चानुसरणीयेति। भवानेव तावत् पश्यतु सुतरां पुष्टाङ्गः शिक्षितश्चायं जनः। एतादृशस्य जनस्य कोऽर्थ एतद्विधेन जीवितेन? अनेन तु जनानां मध्ये निवसितव्यम्। तत्रायं महान् समाजसेवको जननायको वा भवितुमर्हति। एवं लोकः कृतार्थो भविता जनश्चायं यशस्वी। को न्वर्थ एतादृशस्य जनस्य मौनी भूत्वैकान्तसेवनेन? सिद्धश्चेदेषः, स्वकीया सिद्धिरनेन परोपकारे विनियोज्या। अन्यथा त्वेष रात्रौ गुहाप्रविष्टेन भल्लूकेन व्याघ्रेण वा केनचिद् व्यापादितःससिद्धि पञ्चत्वं प्रापितो भविष्यती' ति।

एवं सावेशं भाषमाणो नरेन्द्रोऽनवधानतयोच्चावचबहुले नगोद्देशे तस्मिन् सहसा स्खलितः। स्खलनध्वनिं श्रुत्वाहं झटिति प्रतिनिवृत्य हस्ताभ्यामगृह्णं तम्। तदृतेऽसावेकपद एव निर्झरिणीजले पतितो भवेत्। उत्थाय सकम्पमुक्तं तेन—'मन्ये, महात्मासौ मयि प्रकुपितः। तत्कोपवशादेवैतादृशी विभीषिकोत्पन्ना। अतः परं नापवदिष्यामि तमि' त्युक्त्वा गाम्भीर्यं भेजेऽसौ। 'न भवेद् दुर्घटनैषा तत्कोपोद्भवा, तथापि तद्विषयकदुश्चिन्तनाद्विरम्य सावधानं प्रक्रमितव्यम्। मार्गस्त्वेष विषमः। पदे पदे स्खलनभयमुत्पद्यते। तदधिकृतं किञ्चिद्विपरीतमनुच्चार्याप्यहं मार्गवैषम्यभीतोऽस्मी' ति कथञ्चिदाश्वासितोऽसौ मया।'

   

एवं कथञ्चित् क्रममाणावावां होरानन्तरं विशदां स्थलीमेकामागच्छाव यत्र निर्झरिणी साऽन्यस्यां कस्यांश्चिद् जलधारायामात्मानं व्यसृजत। उभयोः

सङ्गमादेव जलधारानिक्तता पार्श्वभूमिर्वैशद्यमवाप । पर्वतानां तारतम्यं रमणीयमलक्ष्यत । यावन्नगस्योपरिभागे क्वचित् कृष्णत्वं क्वचिच्च हरितत्वमभ्राजत तावत् पादादामध्यभागमव्यवहिता हरीतिमैव नयनेऽभ्यरञ्जयत् । निर्झरिणीद्वयसङ्गमादुद्गतो ध्वनिस्तारतारः संवृत्तः । गगनमध्यादीषदपसृतो रविरुपत्यकार्धमेवातापयद् घर्मेण ।

'अहं तु श्रान्तोऽस्मि । स्थली चैषा रमणीया । पूर्वतरं तु पादन्यासव्यतिरिक्ता क्वचिदप्यवस्थानार्हा भूमिर्न लब्धा । अग्रेऽपि न जाने लप्स्यते न वा । अथ कतिपयक्षणपर्यन्तमवस्थायात्र श्रमो विनोदनीयः ।' मह्यमप्यरोचत नरेन्द्रस्यैष प्रस्तावः । 'का हानिः । अत्रैव शिलाखण्डे निषीदाव । कालातिपातश्च न कार्यः । अपक्षीयते हि दिवस' इत्युक्त्वाऽहमप्यात्मानं तत्रैवाक्षिपम् ।

'पश्यतु भवान्, कियन्मनोरमैषा स्थली ! शिखराणामारोहः कियानानुक्रमिको वनस्पतीनां हरीतिमा च कियती नयनानुरञ्जिका ! वायुश्चात्र कियान् विशुद्धः ! कथमाप्नुयादेतद्विधं सुखं जनसम्मर्दाकुलेऽहमहमिकाजनितसङ्घर्षान्दोलितेऽभियन्त्रितयानोत्सृष्टधूमदूषिते गत्यागत्योत्थापितरजःकणाकुलितेऽन्योन्याहितसाधनवैचक्षण्यबहुले निजनिजमतवादप्रचारमेघनादायिते जीवनलोपिवर्गसङ्घर्षव्यापृते नानाविधापराधसङ्कुले नागरजीवने ? नगरद्वार्येव तिष्ठावः सम्प्रति । गते सति तत्र तद्विध एव जीवनक्रमः प्रचलिष्यति । कच्चिदत्रैवावासः स्यादावयोः ! तदभावे नगरगमनात् पूर्वं पूरयिष्यावः स्वं स्वं श्वासकोशं विशुद्धेन वातेन, मनः सुरम्यदृश्येन, हृदयं च औदात्त्येन । पुनश्च भवतानुमतोऽहं स्थलीमेनां चित्रार्पितां कर्तुमिच्छामि ।'

विषमेऽप्येतस्मिन् स्थले नरेन्द्रस्य चित्रणलालसां प्रतिरोद्धुं नाशक्नुवम् । 'क्रियतां क्रियताम्, परं विलम्बो न कार्यः । दिवसो हि परिणतः । ऋषिकेशं विनाऽवस्थानमपि नास्ति क्वचिदि' त्येवं मय्युक्तवत्यसौ पोट्टलिकाच्चित्रणोपादानं निस्सारयितुं प्रारभत, चित्रफलकं काष्ठमये पट्टके प्रासारयत कीलकैश्च यथास्थानमस्थापयत् । प्राग्वर्तिकाचालनात् स निर्निमेषदृष्टया पर्वतारोहं पुनरलोकयत् । निर्बाधमेष आलेखनकर्म करोत्विति मनसि कृत्वा पृष्ठदेशे परिवृत्य मया दृष्टिरितस्ततो व्यापारिता ।

पृष्ठदेशस्थः शिखरो विरलवनस्पतिरासीत् । एतावतासौ स्वरूपं स्पष्टतयाऽदर्शयत् । सौष्ठवाभावाद् धारासारवृष्ट्यासौ स्थाने स्थाने विषमीकृतोऽभूत् । भित्तिगतवैषम्य एष उत्कीर्णा आकृतय इवालक्ष्यत । क्वचिद् व्याघ्राकृतिर्दृष्टि-

पथमायाता क्वचित् सिंहाकृतिः क्वचिद् वृषभाकृतिः क्वचिन्मानवाकृतिः क्वचिच्च देवाकृतिः। एवं प्रकृतिदेव्याकारितं बृहद्देवालयभित्तिसदृशं लक्षित तन्नगाजिरम्। 'विचित्रं खल्वेतदि' त्युक्त्वा समीपतो दिदृक्षुर्यावद् भित्तिमुपागच्छं तावदीषद्वक्रीभूते दक्षिणे पार्श्वे गुल्माभ्यन्तरे गुहामपश्यमेकाम्। सद्यो मनस्यजायत 'विचित्रः खल्वेष संयोगः! प्रागपि हिंस्रपशवो दृष्टाः तदनन्तरं चैका गुहा प्राप्ता। सम्प्रत्यपि हिंस्रपशूनामाकृतयो गोचरीभूता अथ चैषा गुहा दृष्टिपथमागता! तर्ह्यत्रापि केनचिन्महात्मना भवितव्यमि'ति। विचिन्त्यालेखनाभिरतो नरेन्द्रः सङ्केतेनाहूतः। औत्सुक्योत्प्रेरितेन तेन सह गुहाया निरीक्षणमारब्धम्। तस्य मुखे क्वचिन् मृन्मयपात्रकपालो दृष्टः क्वचिच्च धूमायितान्युपलखण्डानि। अभ्यन्तरे तु तस्या नासीत् कोऽपि प्राणी। गुहापि नासीद् गभीरा। एकाक्येव कश्चिन्निवसितुमशक्नोत् कथमपि। 'आवासस्य सङ्कीर्णतामेवानुभूयैतन्निवासिनाऽत्रैव क्वचित् स्थानान्तरे निवसितव्यमि'ति नरेन्द्र उक्तवति 'अनुसन्धेयं खल्वेतत्सर्वमि'ति मया प्रस्तावितम्।

एतस्मिन्नेवान्तरालेऽस्तोमुखो रविः पर्वतमालाभ्यन्तरतः पुनरपि प्राकाशत। प्राचीदिश्यवस्थिताश्शिलोच्चया घर्मोज्ज्वला अभवन्। अथ संवर्धितोत्साहाभ्यामावाभ्यामितस्ततो दृष्टिं प्रसार्योर्ध्वारोहणमारब्धम्। ततोऽनतिदूर एवापरा गुहा दृष्टा। तत्समीपे जीर्णं वस्त्रखण्डमप्येकमवलोकितम्। जनस्तु कश्चिन्न मिलितः। 'मृन्मयपात्राद् यन्मया पूर्वतरमनुमितं तत् सम्प्रति वस्त्रखण्डेन पुष्यते। अत्रत्यो जनोऽसंशयं नास्त्यादिमानवः। तेन तु नागरजीवनपरिचितेन भाव्यम्। यादृशाः कपाला गुहामुखे पूर्वतरं दृष्टास्तादृशानि मृण्मयपात्राणि ऋषिकेशे प्रायः प्राप्यन्ते। अथर्षिकेशादेवानीतं स्यादेतत्पात्रम्। वस्त्रखण्डं चैतद् विद्युच्चालितयन्त्रनिर्मितमस्ति। परं जनस्त्वेष कुत्र गतः स्यात्? इदानीन्तनजीवनसाधनपरिचितोऽप्येष नास्ति गृहस्थः। गृहत्यागिनैवानेन भाव्यम्। एकाक्येव ह्यसावेतस्मिन् भयावहे स्थले निवसति। ऊर्ध्वतरं गत्वाऽन्वेष्टव्योऽसावि'ति नरेन्द्रमुखादुपश्रुत्य जातकुतूहलेन मयाप्युक्तं 'गच्छावे'ति।

एतावता कालेन भगवान् भास्करोऽस्तप्रायो बभूव। रक्तवर्णं च तद्बिम्बं बृहदाकारतां नीत्वोत्थितश्रृङ्गद्वयक्षितिजदैत्येन कवलीक्रियमाणमिवालक्ष्यत। तज्जिघांसाभीतमिव दृश्यजातं निशाञ्चले तिरोधातुमारेभे आत्मानम्। तमिस्रावृतः पर्वतपादो महतीं बिभीषिकामुपस्थापयामास। पादाभ्यन्तरप्रवाहिणी पयस्विनी निखिलमप्युपत्यकागह्वरमनादयत्। वृकश्रृगालसरीसृपरवैरभिझङ्कृतः शिलोच्चयमध्यभागः। अथानुसन्धानपरयोरप्यावयोर्मनसि भीतिः पदमाधातु-

मारेभे। 'सम्प्रति निवर्तनमेव वरम्। अन्येद्युरागमिष्याव:। तमस्यनुसन्धानं न केवलं दुष्करं भयास्पदमपि भवती'ति मदीयां मन्त्रणामधिगम्य नरेन्द्रोऽपि व्यचलत्।

  

एतस्मिन्नेवावसरे किञ्चिद्दूरस्थ: प्रदीप: प्रज्वलितोऽदृश्यत। तेनैव समं मधुर: शब्दोऽपि श्रुतिपथमायात:—'आगच्छताम्। भवन्तावेव प्रतीक्षमाण: स्थितोऽस्मि।' 'आश्चर्यावहं खल्वेतत्! को नु खल्वेष आवां प्रतीक्षमाणस्तिष्ठेदत्र? न हि कश्चिन्मत्परिचितो जनो यस्तावदेतस्मिन् दुर्गमे प्रदेशे प्रतिवसेत।' 'नैव मदीय' इत्युक्तमाश्चर्यचकितेन नरेन्द्रेण। 'तर्हि क एष स्यात्?' यावदेवं विमृशन्तावतिष्ठाव तावत् पुनरपि शब्द आयात:—'नारायण! अलं विचिकित्सया। निश्शङ्कमागच्छताम्। दक्षिणेन पथाऽऽगन्तव्यम्। भवन्तावेव प्रतीक्षमाणस्तिष्ठामि चिरात्।' श्रुत्वैतत् साशङ्कं साश्चर्यं चाचलमहं प्रदीपाबद्धदृष्टिर्नरेन्द्रेण चानुगम्यमान:।

कतिपयक्षणपर्यन्तारोहणानन्तरमेव प्राप्त एक आश्रमो दीपप्रभालोकितसस्मिताननेन मध्येवयसि वर्तमानेन श्यामवर्णेन क्षीणकायेन जटिलेन सुखासनस्थेन च मुनिना विराजमान:। उपगम्य चकिताभ्यामावाभ्यां सममेवाभिवादनशब्दो व्याहृत:—'भगवन्! वन्दे' इति।

'नारायण! आगच्छताम्। दिवैव मया ज्ञातं भवन्तावत्रागन्ताराविति। नारायण! किमर्थं चिरायितम्? कच्चिन्मार्गो नोपलक्षित:? पथभ्रष्टता तु भवत्येव विलम्बकारिणी। ऋजुनैव पथाऽऽगतं स्यादि'ति तद्वचनं श्रुत्वा विस्मय उपचित:—'कथं नु खलु महात्मायमावयोरागमनस्य प्रागेवास्मदभिज्ञ: सञ्जात:? आगमनमप्यावयोराकस्मिकमेव। आवां तावद्हृषिकेशगन्तारौ। गुहादर्शनादेव सहसाऽऽवर्तितो न: पन्था।

'नारायण! आगच्छताम्। आसनं गृह्णताम्। अलमतिचिन्तनेने'ति साञ्जलिं सविनयं चाहूतावावाम्।

भूमिस्तावत् समतला मृदवलिप्ता चासीत्। तदुपर्यास्तृतमासीत् कुशमयं कटम्। महात्मापि तद्विध एव कटान्तरे सुखासनमवलम्ब्यातिष्ठत्। पिनद्धाधोवस्त्रमात्र कृशमपि तच्छरीरं सौष्ठवपूर्णमलक्ष्यत। प्रदीपालोके प्रलम्बकूर्चश्मश्रुसंवृतं सस्मितं च तदोष्ठयुगलं गहनवनमध्यप्रवाहिणी पयस्विनीव रससिक्तमदृश्यत। कटिपर्यन्तावलम्बिनी चासीत् तज्जटा। तत्समक्षमेव नात्युन्नते काष्ठमये

ग्रन्थासने रगाजोद्घाटितं जीर्णपत्रात्मकं रामचरितमानसम् । 'यदा प्रभृति भवतोरन्यतमो निर्झरिण्यभिमुखं स्खलितस्तत आरभ्य भवन्तावेव प्रतीक्षमाण-स्तिष्ठाम्यत्रे'ति स्मितविच्छुरितेनौष्ठयुगलेनोवाचासौ । अथ साश्चर्यमुक्तं मया— 'कथं नु खलु विदितमेतदत्रभवतः? सुदूरे परोक्षे च स्थले घटिता सा हि घटना ।'

'एवमेव । परं गुरुमहाराजस्य प्रसादेन । नारायण ! नास्त्येतस्मिन् जने किञ्चित् । एतच्छरीरं तावन्मृण्मयघटकल्पम् । यदेव गुरुमहाराज एतस्मिन् घटे निदधाति तदेवैष आत्मीयत्वेनावबोधते ।'

'कुत्र तावद् भवतो गुरुः ?'

'मम गुरुमहाराजस्तु विंशतिवर्षपूर्वं तत्याज शरीरम् ।'

'अप्येकाक्येव निवसति भवानत्र ?'

'यदा कदा तु कश्चिदपरो महात्मा समागच्छति । परं प्रायश एकाक्येव निवसामि । नारायण ! नास्ति किञ्चिद् भयमत्र । गुरुमहाराजोऽप्यत्रैव विराजते । तत्प्रभाववशादेव निवसामीह । गुहाभ्यन्तरे विद्यते तत्समाधिः ।'

'महात्मन् ! गुहा तावदतिलघ्वाकारा दृश्यते ।'

'नारायण ! नैवं खलु । आगच्छताम्, दर्शयानि ।'

इत्युक्त्वा महात्मासौ पर्णकुटीरादुत्थाय प्रदीपं हस्ताग्र आदाय कुटीरसंलग्नगुहायाः मुखं प्रति चचालावाभ्यामनुगम्यमानः । बृहदाकारमासीद्गुहाया मुखम् । तदभ्यन्तः प्रविश्य दृष्टः स समाधिः । 'गुरुमहाराजस्तु सशरीरोऽप्येतस्यामेव गुहायां न्यवसत् । अग्रेऽस्ति तत्प्रज्वालितोऽग्निः । 'एषोऽग्निर्निर्वापं न प्राप्नुयादि' त्यस्ति तन्निर्देशः । अथ प्रत्यहं काष्ठमानीयैतस्याग्नेः सातत्यं निर्वहामि । एतस्मिन्नग्नावेव विद्यते गुरुमहाराजस्यात्मा । यावदग्निर्ज्वलिष्यति तावदसावत्र निवत्स्यति । तत्सन्निधानान्नास्त्यत्र भयं नाम किञ्चित्, नैव कृच्छ्रता काचित् । यत्किञ्चिन्मयाऽपेक्ष्यतेऽत्र निवसता तत्सर्वमनायासमेवोपलभ्यते । विंशतिवर्षाणि मयैवमेवातिगमितानि । मन्ये गुरुमहाराजोऽत्रैव सजीवः सन्निहितः । अवशिष्टोऽपि जीवनकाल एवमेवातिगमिष्यति । किं नु खल्विच्छेयमतः परम् ? गुरुमहाराजस्य सेवा जगन्नियन्तुर्भगवतश्च ध्यानम्—अतोऽन्यत् किं कामेय ?'

'त्रिशूलमप्येतद् गुरुमहाराजस्यैव किम् ?' इति मया पृष्टमग्न्याधानसमीपस्थं महदाकारं त्रिशूलमधिकृत्य ।

'सत्यमनुमितं नारायण ! गुरुमहाराजस्यैवैतत्। एतत् त्वसौ निरन्तरमेवात्मपार्श्वे निदधौ। विचित्रा खलु कथैतस्य त्रिशूलस्य। एतस्यां गुहायामेवोपलब्धमेतत् तेन। युवावस्थाया एवारभ्यासावुवासैतस्याम्। तेषु दिवसेष्वेकाक्येव न्यवसदसावत्र। गुहाभोगस्तु तदानीं समाधिपर्यन्तमेवासीत्। निवसतोऽत्र तस्य कस्यांश्चिद् रात्रौ स्वप्न आगतो यद् 'गुहायाः पार्श्व एकस्मिन् कस्यचित् पूर्ववर्तिनो महात्मनो निधिर्विद्यते। उत्खननीयोऽसौ त्वये'ति। अन्येद्युः पार्श्वभूमिरुत्खाता। त्रिशूलमेतज्जलपात्रं च प्राप्ते तस्मात्। उत्खननादेव गुहैषा वैशद्यमवाप। आगत्यात्रावलोकयतु भवानाभोगमेतस्याः।' एवमुक्त्वासौ तस्मिन्नेव पार्श्वे दीपज्योतिरनयत। 'बृहदाकारा खल्वेषे' ति मन्मुखाच्छ्रुत्वा जातोत्साहेन तेन निगदितम्—'सन्त्यन्या अप्यस्मदन्विष्टा बह्वयो गुहा अत्र। यत्सत्यं पञ्चविंशतिवर्षपूर्वं यदाहमत्रागच्छं तदापश्यं प्रागेवागतं शिष्यान्तरम्। अहं त्वशिक्षितप्राय एवास्मि, परमसावासीत् सुशिक्षितः। उभयोरागमनात् पूर्वमेवासीद् गुहैषाऽन्विष्टा गुरुमहाराजेन। अथ मय्यागते सति पूर्वाह्ण एकस्मिन् पर्णशालाया. पृष्ठभागे आकार्यावां त्रिशूलेनानेन भूमिं प्रहृत्योवाचासौ—'भूभागमेनमुत्खनतमि' ति। उभाभ्यां सद्य एवोत्खननं प्रारब्धम्। होरापर्यन्तोत्खननेनावगतं काचिद् गुहेयमिति। आगच्छत्सु दिवसेषु शनैश्शनैर्मृदाऽपिहितं तन्मुखद्वारमुद्घाटितमाभ्यन्तरप्रकोष्ठे च प्रवेशः कृतः। नितरां भयावहस्त्वासीदाभ्यन्तरो दृश्यः। नारायण ! बहवो नरकङ्कालाः सममेव दृष्टास्तत्र। सर्वेऽपि ते वामनाकारा अलक्ष्यन्त। स्त्रियोऽप्यासन् तेषु पुरुषा अपि। कथं नु खल्वेतस्मिन् तपोगिरौ स्त्रिय आगताः स्युः पुरुषैश्च साकमेतस्यां गुहायामूषुरित्यवगन्तुं नापारयम्। पात्रावशेषस्तु कोऽपि न प्राप्तः। तीक्ष्णीकृताग्रदेशाः पाषाणखण्डास्तावच्छतशो दृष्टाः। गुहायाः स्थलविशेषस्त्वतितरं धूमायित आसीत्। इतस्ततो विकीर्णाः केशा अप्यतिमात्रं दृष्टाः।

'नारायण ! यत्सत्यं दृष्ट्वैतत्सर्वमहं तावन्नितरां विभीत आसम्। 'के नु खल्वेते स्युः ? कथं नु खलु तपोवनंप्राप्ताः स्युरेते सर्वे ? ऋषयश्चेदेते, किमर्थं सस्त्रीका न्यूषुरत्र ? किमर्थमेते सर्वेऽपि वामनाकारा एव ? सर्वेऽपि बाला एव भवितुं नार्हन्ति। केशबाहुल्योऽपि कौतुकावहः। सर्वेषां नितरां पात्रहीनत्वमप्याश्चर्यं जनयती' ति प्रश्नजातं मनसि निधाय यावच्छिष्यान्तराभिमुखोऽभवं तावत् तमपि तथैवानवबोधाकुलमपश्यम्।

'अथ स्वयमवगन्तुमपारयद्भ्यामावाभ्यां वृत्तान्तमेतत्सर्वं सायंकाले ध्यानोत्थिताय गुरुमहाराजाय निवेदितं तेन चोक्तम्—'सम्प्रत्येव गच्छतं गुहाद्वारं

च पूर्ववदेवापिधीयेथामि' ति। गुरोराज्ञां शिरसि निधाय तत्क्षणमेव प्रतिगतं गुहामुखं च पूर्ववदपिहितम्। परं मदीया जिज्ञासा न शशाम। अथ कालान्तरे प्राप्तावसरेण मयैतदेवाधिकृत्य साग्रहं पृष्टो गुरुमहाराज एवमवादीत्—'ब्रह्मचारि! मा बिभेहि। ते तु बालखिल्यनामान ऋषयः सन्ति यैरग्निमाविष्कृत्य तद्बलेन पाशवशक्तिर्वशीकृता। तैरेवादिकाले निर्मायैताः सर्वाः गुहाः परवर्तिमुनीनां निमित्तमुत्सृष्टाः। ते तु लघ्वाकारा अपि सन्तो महान्तो बभूवुः। चिन्तय तावत् तेषां परिवेशस्य कष्टमयत्वम्। अशेषापि भूमिरासीद् गहनवनाच्छन्ना। व्यालवृकव्याघ्रगजप्रभृतयो हिंस्रपशवो भूरिशो यत्र तत्र रेमुः। अवरपशुवन्मानवोऽपि तेषां भक्ष्य आसीत्। अकथितमेव ज्ञायते पाशवशक्तिसमक्षं मानवस्य शारीरं दौर्बल्यम्। विमृश तावत् तानेव नरानधिकृत्य ये खलु हिंस्रजन्तुभिः खादिताः स्युः। अद्य त्वनुमातुमपि न शक्यते दिवसेषु तेषु कियान् मानवरक्तपातोऽभूदिति। तदानीन्तनेन मानवेनात्मरक्षणे यत्किञ्चिदपि साफल्यमवाप्तं तत्तु सर्वथा श्लाघनीयम्। भयावसरे समापतिते सति वृक्षेष्वारुह्य, जले निमज्य, शिलान्तरालेष्वात्मानमुपगुह्य जीवितं रक्षितं तैः। परन्तु सन्त्येतादृशः पशवो ये खलु वृक्षेष्वप्यारोहन्ति, जलेऽपि तरन्ति, शिलान्तरालेऽपि प्रविशन्ति। मानवाच्छक्तिमत्तरा अपि ते। कथं नु खल्वेतेभ्य आत्मानमभिरक्षेन्मानवः? अवरः पशुस्तावदेतादृशेषु सङ्कटेषु समापतत्सु जीवनक्षयमेव प्राप्तुमर्हति। मानवेन त्वेतन्निमित्तं बहव उपाया अन्विष्टा ये खलु तस्य बुद्धेराश्चर्यकारितां निदर्शयन्ति। चिन्तय तावद् यदस्त्येका भयावहाऽरण्यानी। एकाक्येव विचरन् कश्चिन्मानवस्तत्र भल्लूकवृन्देन केनचिदाक्रम्यते। सम्प्रति किं करिष्यत्यसौ? धावनकुशलश्चेत्, पलायितुमर्हति। परं कियद्दूरपर्यन्तम्? श्रान्तेन तेन पलायनमार्गापतिते वृक्षे कस्मिंश्चिदारोढुं शक्यते। परं भल्लूकवृन्दोऽपि तदनुपदमेवागन्तुमर्हति वृक्षं चारोढुम्। एवं सति, तद्वधोऽपरिहार्य एव प्रतीयते। न हि मानवनखो भल्लूकनख इव कर्तनक्षमः, न च मानवमुखं भल्लूकमुखमिव चर्वणपटुः। एवं सति, भाग्यहीनोऽसौ जनः किं कुर्यात्? अपि त्वमनुमातुं शक्नोषि?' 'भाग्यहीनोऽसौ जनो व्यापादितो भविता। अन्यत् किं स्यादि'ति मयोक्तम्। अथ गुरुमहाराजः प्रत्युवाच—'वत्स! अस्त्युपायोऽत्रापि। नखस्य मुखस्य वा प्रयोगं करिष्यति चेदसौ तर्हि मृत्युं प्राप्स्यति। परं हस्ताग्रस्य सङ्कोचन-प्रसारणक्षमतां प्रयुञ्जन् चेदसौ पादपाग्राद् दण्डं त्रोटयित्वा आरोहतां भल्लूकानां मुखेष्वक्षिषु च प्रहरिष्यति तर्हि तेषां शतमपि पराजेतुं शक्ष्यति। एवं रक्षितजीवितोऽसौ बन्धुभिर्मिलित्वा तद्रक्षोपायं तेभ्यो निवेदयिष्यति चेत्, तर्हि तेषु समादृतो भविष्यति तत्कृत आविष्कारश्चाभिनन्दितः। वत्स! पुनरपि

चिन्तय । पयस्विन्या अपरस्मिन् तटेऽस्ति कश्चिदेकाकी मानवः । एकाकिनं दृष्ट्वा तं कश्चिद् व्याघ्रः पयस्विनीं तीर्त्वा तं जनं व्यापादयितुमुत्सहते । दुस्संयोगान्नास्ति पादपोऽपि कश्चित् तत्रारोहणाय । ततः पलायनमपि नास्त्युपादेयम् । व्याघ्रो हि मानवाद् द्रुततरगतिर्भवति । अथानन्यगतिकत्वाज्जायते तन्मनसि 'पार्श्वस्थेनोपलखण्डेनैतेन प्लवमानमेनं प्रहरामी'ति । एवं सङ्कल्प्यासावुपलखण्डमेकमादाय व्याघ्रस्योपरि क्षिपति । एतावता किञ्चिद् विचलितं तं दृष्ट्वोपलखण्डान्तरमपि तस्योपरि क्षिपति । अथ हतोत्साहो व्याघ्रः प्रतिनिवर्तते । एवं रक्षितजीवितोऽसौ जनः आवासं प्रतिनिवर्त्यात्मरक्षणोपायमेनमिष्टजनेभ्यो निवेदयति । कालक्रमेण तेषां मनसि जायत 'उपलखण्डानेतान् तीक्ष्णाग्रान् कुर्याम यथा प्रभाववत्तरा भवेयुस्त' इति । आदिवासिभिस्तीक्ष्णीकृताग्रदेशा उपलखण्डा अद्यापि स्थाने स्थाने भूरिशः प्राप्यन्ते ।

'नन्वज्ञानतिमिराच्छन्ने युगे तस्मिन्ने ताद्दशोपायान्वेषकेणर्षिणैव भवितव्यम् । गतानुगतिकत्वं नाम सुकरं, परन्त्वद्दष्टपूर्वोपायान्वेषणं त्वृषित्वसापेक्षम् । एवमेव, वत्स ! अवधेहि तावदवस्थां तां यदा खलु मानवोऽग्निप्रयोगमपि न जज्ञे । अथापक्वमेवान्नमसौ चखाद, शीतार्त एव वृक्षादिषु शिश्ये । एवमेव गच्छता कालेन शुष्कशाखानामन्योन्यघर्षणाद् वनमध्ये दावाग्निरुत्पेदे । अज्ञानवशात् तद्भीत आदिमानव इतस्ततो दधाव । अथ सहस्रेषु वर्षेष्वतिगतेषु पलायनशीलानामादिमानवानां कश्चिदनतिदूरं गत्वा विभीतोऽपि जिज्ञासते 'कथं खल्वग्निरयं प्रसरती'ति । कतिपयदिवसानन्तरमग्नौ निर्वाणोन्मुखे जाते भस्मावशिष्टप्रायं काष्ठखण्डमेकमादायासौ काष्ठान्तरेण संयोजयति । एवमेव शनैश्शनैरग्निप्रज्वालनविधिमाविष्कृत्यासौ क्वचिद् दावाग्निदग्धं कन्दमूलं खादित्वा स्वयमप्यग्निं प्रज्वाल्य पाकानुसन्धानं कर्तुमर्हति । हिंस्रपशून् दावाग्निभीतान् दृष्ट्वाऽग्निप्रयोगेण तदपसारणविधिरपि तैरन्विष्टः स्यात् । एवं येन जनेनाग्निप्रज्वालनविधिरन्विष्टस्तेन तावदृषिकल्पेन भवितव्यम् । एवमेव जनेन येन सर्वप्रथमं वृक्षादवरुह्य येन केनापि खनित्रेण कश्चिच्छैलगह्वरो निवासार्थं विस्तारितः स्यात् तेनापि खलु ऋषिकल्पेन भवितव्यम् । ननु, वत्स ! एतद्विधा एव जना एते येषामस्थिपञ्जरो युवाभ्यामन्विष्ट एतस्यां गुहायाम् । लघुकायैरप्येतैर्महद्बुद्धिबलान्वितैर्भाव्यम् । स्वल्पपरिग्रहा अप्येते स्वयमर्जितपरिग्रहाः सन्ति । अज्ञातवासिनोऽपि तेऽक्षुण्णावासाः सन्ति । निर्माणार्थमुत्खातो गर्तो यथा भवनस्याधारभूमिर्भवति तथैव गुहा एता मानवसंस्कृतिसौधाधारभूताः सन्ति, अस्थिपञ्जरमात्रावशिष्टा गुहावासिनश्चैते तन्निर्मातारः । यथा खल्वा-

धारभूमेर्विगलनात् सौधं धराशायी भवितुमर्हति तथैव गुहावासस्य विस्मरणादेकान्ततः परित्यागाच्च मानवसंस्कृतिः समूलनाशं प्राप्तुमर्हति। ये तावदेतेऽस्थिपञ्जरमात्रावशिष्टा गुहावासिनस्तेऽस्मदैतिह्यगुरवः। ये च सम्प्रति गुहासु निवसन्ति ते खलु भाविसंस्कृतिप्रवर्तकाः। अत एव, वत्स! एतानस्थिपञ्जरान् प्रणम, सम्यग्गुहावासं चाचर। दुष्करः खल्वेष जीवनविधिः, परं महती तदुपलब्धिः। यदा तु नगरस्था अभ्रंलिहाः प्रासादा धूलिसात्कृता भविष्यन्ति तदाप्येता गुहा अक्षुण्णाः सत्यो नैकसहस्रवर्षोपरान्तमपि न केवलं मानवैतिह्यगाथां श्रावयिष्यन्ति, अपितु मानवसंकृतेराश्रयत्वेनोपास्यन्ते। वत्स! अत्रैव तिष्ठ। एतन्निवासः खलु ज्ञानप्रदो योगक्षेमावहश्च।'

'नारायण! एतदुक्त्वा गुरुमहाराजः समाधिगुहां प्रविष्टः समाधिस्थश्च बभूवापुनरुत्थानाय। तत्पार्थिवावशेषोऽत्रैवावाभ्यां समाधिं नीतः। अथैवं गुरुमहाराजे समाधिस्थे सति, अपरो ब्रह्मचारी नितरां विषण्णो बभूव। निर्झरिणीमेनामवलम्ब्यासौ तदनुतटं दूरं क्वचिद् गतः। अहं त्वत्रैव निवसामि प्रायश एकाक्येव। अद्य भवतोरागमनान्महती प्रीतिर्जाता। कतिचिद्दिवसपर्यन्तमत्रैव निवसताम्। कष्टमयं खल्वत्रत्यं जीवितम्। परमेतावताहं कृतार्थो भविते'ति।

आवाभ्यां तु दिनद्वयमभुङ्क्त्वैवातिगमितमासीत्। निर्झरिणीजलपानमात्रमेवासीदस्मदभ्यवहारसाधनम्। सम्प्रति श्रमातिरेकाच्छरीरं तावदात्मानमेवाभुङ्क्त। तन्निवारणाय भोजनमनिवार्यं बभूव। महात्मनो वार्तारसो नासीदलमिदानीं बुभुक्षायाः विस्मरणाय। अथ महात्मनैव जिज्ञासितं नौ किमभ्यवहार्यमिति। 'यत्किञ्चिदपि सुलभं खादितुं शक्नुव' इत्येवं मया निवेदितोऽसौ घटाभ्यन्तरतः कन्दमूलमेकमादाय भस्मबहुलेऽग्नौ निक्षिप्य किञ्चित्कालानन्तरं बहिरानीतवान्। ततः परं पुरोवर्तिवटवृक्षात् पत्राणि कानिचिदाहृत्य तदुपरि पक्वं कन्दमूलं न्यधात्। अथाङ्गुलीभिरग्रभागं गृहीत्वा यावद् वेगेनाचालयत् तावत् तदभ्यन्तरतः पक्वतण्डुलसन्निभाः श्वेतवर्णा अवयवाः पत्राणामुपरि भूरिशो निपतिताः। समुद्गतसुरभिवाष्पं तमुद्दिश्यासाववादीत्—'नारायण! आगच्छतां सेवेतामि'ति।

अनन्यगतिकत्वादनुत्साहपूर्वकं यदा भोजनमारब्धं तदानुभूतमेतादृशं सुस्वाद्वशनं कदापि न गृहीतमिति। 'महात्मन्! भवताप्यशनीयमेतदि'ति प्रार्थितः सोऽवादीत्—'नारायण! पञ्चदिवसपूर्वं मया गृहीतमेतदेव। अथ दिनद्वयानन्तरमेव मयि बुभुक्षा पुनरुत्पत्स्यते। सकृद् भुक्तमेतदशनं सप्ताहपर्यवसायी भवति। अष्टमेऽह्न्येव भवन्तावपि बुभुक्षया बाधितौ भवितारावि'ति।

'आश्चर्यमयं खलु भवद्दर्शनमेतदि'ति मय्युक्तवति महात्मना निगदितं—'नारायण ! अतोऽपि मधुरतराः खाद्यपदार्था अस्माभिर्ज्ञायन्ते यान् भुङ्क्त्वा मासपर्यन्तं कश्चिद् बुभुक्षापीडितो न स्यादि'ति ।

भोजनान्ते तत्रैव पर्णशालायां कुशास्तरणे शयनं व्यवस्थितम् । प्रदीपो निर्वापितः । अन्धे तमसि तस्मिन् दृश्यजातं विलयं गतम् । केवलमासन्नप्रवाहिण्याः पयस्विन्याः कलकलध्वनिस्तिमिराभ्यन्तरतः श्रुतिपथमागतः । अज्ञानामतिश्रान्तत्वाद् झटित्येव चैतन्येन सह ध्वनिश्रुतिरपि समाहिता ।

  

काशीहिन्दूविश्वविद्यालयस्य प्राङ्गणे छात्रसङ्घोद्घाटनसमारोहानन्तरमागामिदिवसीयावकाशार्थमान्दोल्यमानानां विद्यार्थिनां तुमुलध्वनिः कर्णशष्कुलिमुत्पाटयति । 'श्वोऽवकाशो भविता', 'छात्रसङ्घो विजयताम्', 'अत्याचारोऽसह्यः', 'काशीहिन्दूविश्वविद्यालयो विजयतामि' त्यादीनि वाक्यानि मुहुर्मुहुरुद्घुष्यन्ते । कलासङ्कायादारभ्य कुलपतिनिवासोन्मुखो महद्रोषाकुलो विद्यार्थिजनसम्मर्दोऽन्योन्यसङ्घट्टनपूर्वकं वेगेन प्रसरति । तन्मध्यवर्तिनेतस्ततः सङ्घृष्यमाणेन मयापि यदा कदासावेव स्वरो मुखादुच्चार्यते । बिभेमि खलु नोच्चारयिष्यामि चेत् तर्हि परिपार्श्ववर्तिभिर्विद्यार्थिभिर्गर्हितो भविष्यामीति । नवागन्तुको ह्यस्म्येतस्मिन् विश्वविद्यालये । न जानाम्यत्रत्यं विधानम् । परं मनसि जायते, 'अप्येषैव सरणिरेतस्मिन् विश्वविश्रुते विश्वविद्यालये विद्याध्ययनस्य यत्र तावदनध्यायावकाशार्थं सहस्रशोऽपि छात्रा इत्थं सङ्घीभूयाभद्रोद्घोषपरा भवन्ति । किं कुर्याम् ? बृहज्जनसम्मर्दपरिवृतोऽस्मि । को नाम शृणुयान्मदीयं शब्दम् ?' इत्येवमन्तरतो बाह्यतश्च पीड्यमानेन मया कुलपत्यावासपर्यन्तमागम्यते । पादपच्छायया घनीभूते नैशान्धकारसमुद्रे 'श्वोऽवकाशो भविता', 'छात्रसङ्घो विजयताम्', 'अत्याचारोऽसह्यः', 'काशी-हिन्दू-विश्वविद्यालयो विजयताम्' इत्येतानि वाक्यानि बलवत्तरङ्गायन्ते । अथ सहसा रोषवाक्यान्यस्तं गच्छन्ति, दूराच्छ्रूयते हर्षध्वनिः, अशेषोऽपि परिवेशः करतलध्वनिना प्रतिध्वन्यते, श्रूयन्ते चाभिनवानि वाक्यानि—'श्वस्तनोऽवकाशः स्वीकृतः', 'छात्रसङ्घो विजयते', 'स्वं स्वं छात्रावासं गच्छते'ति ।

श्रुत्वैतत् सोल्लासमितस्ततोऽभिधावतां विद्यार्थिनां समूहेनैकेनाहतोऽहं सहसा भूमौ निपतितोऽस्मि । अथ स्वप्निलनिपातजन्याघातेन प्रतिबोधित आत्मानं यत्सत्यं भूमौ निपतितं प्राप्नोमि, परं न काशीहिन्दूविश्वविद्यालयीयप्राङ्गणे

प्रत्युतैतस्मिन् हिमालयीयाश्रमपदे। नैशनीरवतोपबृंहितप्रसरः प्रस्रविणीध्वनिरेव जनसम्मदजन्यकोलाहलत्वेन स्वप्नायित इति तदलीकत्वं सद्य एवाभिज्ञायाश्वस्तचितः पुनरपि स्वापं गतोऽस्मि।

परमिदानीमपि न मुञ्चति मां स्वप्नवृत्तिः। अलक्ष्यकालव्यवधानानन्तरमेवापरं पश्यामि जनसमूहं तस्मिन्नेव विश्वविद्यालयप्राङ्गणे। मेघाटोपाच्छन्नगगनादवाप्तगवाक्षसन्निभावकाशो भगवान् भास्करः प्रखरतेजसा प्रकाशते। वैदूर्यमणिमया इव शोभन्ते वृष्टिप्रक्षालितपत्राः पादपाः। इतस्ततो विकीर्णाः शतशोऽपि छात्रसमवाया विद्यन्ते वार्तालापरताः कलासङ्कायप्राङ्गणे। अथ पश्यामि सङ्कायसौधविनियोजितस्तम्भानामन्यतममाश्रित्यैकपादावस्थितं स्तम्भावसक्तपादान्तरं जानुपर्यन्ताधोवस्त्रम् उत्तरीयपरिवेष्टितसस्कन्धोदरदेशं मुण्डितशिरस्कं शाम्भवीमुद्रास्थापितनेत्रयुगलं दक्षिणहस्ताहितग्रन्थाध्ययनरतम् अनादृतेतरच्छात्रजनकृतकोलाहलम् अनवहितपरिवेशं शान्तं दान्तं प्रमुदितमुखच्छविम् उद्दीप्तभालं कण्ठार्पितरुद्राक्षमालं निरुपानत्पादं गोशफाकारशिखम् अनतिगौरवर्णम् ओमानन्दाभिधं चिरमित्रम्। 'पञ्चविंशद्वर्षानन्तरमप्येषोऽत्रैव तिष्ठती'ति मनसि विस्मयो जायते। अथवा 'अहमेव तावत् तद्देशकालप्रतिनिवृत्तोऽस्मी' त्युत्पद्यते संशयः। एतच्छंशयगृहीतमानसोऽहमुद्विग्नो भूत्वा यावन्निर्णेतुं प्रयते तावन्निद्रापटोऽपवारितः सहसा। 'अहं त्वस्म्युत्तुङ्गहिमवच्छृङ्गकृतनिवासोऽत्र। कस्माद्धेतोरेतावत्कालानन्तरमोमानन्दस्तावदद्य स्वप्ने समागतः। मया तु तमधिकृत्य प्रायशो विचार्यतेऽपि न............' इति।

  

ओमानन्दस्त्वासीन्मदीयं विश्वविद्यालयीयं मित्रम्। विश्वविद्यालये तावन्मित्राणि भवन्ति बहूनि। ओमानन्दस्तु विशिष्ट एवासीत्। समृद्धकुलोद्भवोऽप्यसौ त्यक्तनिखिलवैभवो विश्वविद्यालयप्रविष्टोऽप्यसावाश्रमस्थनैष्ठिकब्रह्मचारिवेशः पर्यभ्रमत। परिधानकेशोपानदादिसंस्कारवतां विद्यार्थिनां मध्येऽप्यसौ निरुपानज् जानुमात्रावलम्बिताधोवस्त्रो व्युप्तकेशश्चादृश्यत। गोशफाकारशिखश्चासावासीदेव। कुतश्चिद्धैमवताश्रमादागतोऽयं नैष्ठिको ब्रह्मचारी संयोगवशाद् विश्वविद्यालयं सम्प्राप्त इति तद्दर्शनात् प्रतीतिरुदपद्यत। तद्दर्शनं तु दिवैव जातं कदाचिद्विद्यालयप्राङ्गणे कदाचिच्च वृक्षवाटिकायाम्। प्रातस्त्वसौ धावन्नेव छात्रावासाद् गङ्गातटमगच्छत् सन्ध्यावन्दनादिकं चान्वतिष्ठत्। गच्छन्तं तु तं केचिदेव द्रष्टुं शेकुः। तन्निवर्तनमेव सामान्यजनदर्शनविषयीभूतम्। यदा खलु सहस्रशोऽपि विद्यार्थिनः पदातिनो द्विचक्रिकारूढा वा प्रशस्तगोपुरद्वारेण विश्वविद्यालयं

प्रविशन्ति स्म तदायमोमानन्दो गङ्गाजलपात्रहस्तो निरुपानज्जानुपर्यन्तावलम्ब्य-धोवस्त्रमात्रवासा यज्ञोपवीती कण्ठार्पितरुद्राक्षमालो मुण्डितशिराः समुन्नमित-गुल्फश्च तद्द्वारेणैवाधावत् । पश्यन्तु नाम शतशोऽपि जनास्तं चकितदृष्टयः परमसौ त्वनन्यदृष्टिरात्मलीन एवासीत् । स्वछात्रावासे केवलमसावेव स्वपाक्या-सीत् । यदा खल्वन्ये छात्रा भोजनागारे ससुखं सोल्लासं सकोलाहलं सस्पर्ध सुस्वादुभोजनमगृह्णन् तदासौ धूमाकुलितदृष्टिरेकाक्येव पाचनकर्माभिरतो दृष्टः । पठनभोजनप्रभृतिव्यापारजातं तेन नित्यशो दिवैव कृतम् । दिवा त्वसौ कदापि विश्रामशीलो न दृष्टः । तिष्ठन्नपि चलन्नप्युपविशन्नपि प्रायशोऽध्ययनरत एव दृष्टिपथमायातः सः । विद्यालये स्तम्भाश्रयेण स्थितं तमपृच्छमहमेकदा— 'ओमानन्द ! किमर्थं त्वमेतावन्मात्रमध्ययनरतः सम्प्रति, रात्रावपि पठितुं शक्यते त्वये' ति । ईषल्लक्षितविरलदन्तेन सस्मितमुखेनोक्तं तेन—'बन्धुवर ! रात्रावहं न करोमि किञ्चिदपि सांसारिकं कर्म ।' 'तर्हि किं क्रियते त्वया रात्रौ ?' एवं पृष्टेन तेनानुक्त्वा किञ्चित् स्वाङ्गुलिराकाशोन्मुखमुन्नीय हृदयोन्मुखी कृता । तत्सङ्केतार्थं विमृशन् यावदतिष्ठं तावदितस्ततोऽवलोकयन् कटाक्षपटुर्व्यङ्ग्य-विच्छुरिताननो नित्यानन्द आपतितः सचापलं चोवाच—'मुनिवर ! कदा तावदुद्वाहितो भविष्यसि यथा वयं वरयात्रानन्दं लप्स्यामहे ?' मनाक्स्मितमुखेन नोमानन्देन प्रत्युक्तम्—'त्वं तु नित्यानन्दोऽसि । का कथा पुनर्वरयात्रानन्दस्य ? अलं प्रतीक्षया । इदं शरीरं तूद्वाहितं न भविष्यती'ति ।

  

परन्तु वराकेनोमानन्देनात्र किम् ? असौ तु सुदूरं विसृष्टः । मन्ये तावद् विचित्रजीवनचर्यां निर्वहतापि तेन स्नातकपरीक्षायां सर्वप्रथमं स्थानमुपार्ज्या-स्मद्धृत्सु विस्मय उपजनितः । परं को लाभ एतस्याः कुशाग्रतायाः ? आचार्य-पूर्वार्धपरीक्षानन्तरमेव न जाने कुत्र गतः सः ? श्रुतमासीत् तेषु दिवसेषु स्वपित्रो-रेकमात्रसन्ततिरसाविति । तज्जनकोऽपि छात्रावासमागत एकदा मम दृष्टिपथ-मायातः । नितरां सज्जनश्चासावासीत् । वराकः किं करोतु ? पुत्रश्चेन्मतिभ्रष्टो भवेत् तर्हि पिता माता वा किं कर्तुमर्हेत् ? न जाने तत्पितरौ सम्प्रति कथं स्तः ? भवेन्नामोमानन्द एतावता कालेन गृहं प्रतिनिवृत्तः । तत्तु महद्धितकरं स्यात् । कृतार्थौ स्यातां तत्पितरौ । परं कुत एतादृश्याशा ? स्मरामि तावत् तत्पितुः छात्रमेकं सविषादं निवेदयतो यत् तत्पुत्रोऽनुदिनं संन्यासोन्मुखो भवतीति, यथाशक्ति तस्मान्निवारयितुं प्रयतमानस्य च । निम्नाभिमुखं पय इव दुर्निवार्याः खलु वृत्तयः । आचार्यशङ्करस्यापि जननी किलैकाकिनं पुत्रं संन्यासाद्विरमयितुं प्रयतवती । अपि

शशाक सा किञ्चिदपि साफल्यं लब्धुम्? न शशाक सा परिमितसाधना, परन्त्वशकत् किं सर्वसाधनसम्पन्नः शुद्धोदनोऽपि कुमारं सिद्धार्थं प्रव्रज्याया निवारयितुम्? कुमारः किमपि दुःखं नानुभवेदित्येतदर्थं किं किं तेन न कृतम्? परं द्वारपालेषु सत्स्वप्यसौ निशीथे प्रासादाद् बहिर्निर्गतः। महर्षिव्यासस्यापि कथैताहश्येव। परमज्ञानवानप्यसौ पुत्रं शुकदेवं वैराग्याद् रोद्धुं न प्रबभूव। पञ्चवर्षीयोऽपि नचिकेता यमसदनगमनात् किं पित्राऽवरोद्धुं पारितः, आत्मजिज्ञासाया यमराजेन वाऽवारितः? दिवाङ्गनारथतूर्यरत्नसृङ्काप्रभृतिकामार्थोत्तेजकाः पदार्थास्तस्मिन्नकिञ्चित्कराः किल बभूवुः। ओमानन्दोऽप्येवं संवृत्तश्चेत् तर्हि किं चित्रम्? भारतभूमिस्तावदेतद्विधैरेव जनैर्महीयते। एतदाश्रमाधिष्ठितेन महात्मनापि कस्यचित् पुत्रेण भवितव्यम्। गृहं परित्यज्यासावत्र निर्जनपार्वत्यप्रदेशे एकाक्येव निवसति, भूमावेव स्वपिति, कन्दमूलाशन एव कालं यापयति, सिंहादिहिंस्रपशूनामनुग्रहविशेषैरेव जीवति। तथाप्येष तावत् किमप्युपनगरं प्रतिवसति। कियद्भयावहे प्रदेशे निवसत्यसौ प्रातर्दृष्टो महात्मा! पर्वतमालास्तावत् कियदुत्तुङ्गास्तत्र! कियद्गहनं च वनम्! कश्चिद् भल्लूकस्तु दिवापि गुहां प्रविश्य तं नाममात्रशेषं विधातुमर्हति, का कथा पुनर्निशाया यस्यां तु व्याघ्राः सिंहाः शूकरा वृकाश्चाखेटार्थमितस्ततः स्वैरं चरन्ति।

महात्मा त्वसावभिजात इव लक्ष्यते। ओमानन्देनापि कदाचिदेवमेव कृतं भवेत्। संन्यासवृत्तिस्तु तस्मिन्नासीद् भूयसी। स्मरामि तावत् कस्यचिन्मित्रस्य विंशतिवर्षपूर्वं कथयतः—'बन्धुवर! विचित्रं खलु संवृत्तम्। ग्रीष्मावकाश एतस्मिन्नोमानन्दोऽस्मच्चक्षुर्विषयीभूतः।' 'कुत्रे'ति मया सौत्सुक्यं पृष्टोऽवादीदसौ—'यदा खलु यानेन रुडकीनगराद् हरिद्वाराभिमुख आसं तदा साधुसङ्घेनैकेन सह व्रजन्तं तं नितरां साधुवेषं सहसाऽपश्यमि'ति। यद्यस्मत्सुहृदा परमार्थत ओमानन्द एव दृष्टः तर्हि सत्यमेवेदं प्रतीयते यत् स साधुः संवृत्तः। तथा सति सम्प्रति क्व नु गतो भवेत् सः?

अलमेभिर्विमर्शैः। को लाभः? विमर्शमात्रेण त्वसौ न लभ्यः। व्यथन्ते ममाङ्गानि। गतरात्रावपि प्रकामं शयितं नाभूत्। यथाकथञ्चित् प्राणा रक्षिताः। महती खल्वासीत् सा विभीषिका। भगवत्कृपयैवावां रक्षितौ। मन्ये तदनुग्रहवशादेवासौ महात्मापि दृष्टो यद्दर्शनमात्रेणैवाशेषमपि नैशं खेदं सद्य एव विगलितम्। कियान् तेजस्व्यासीदसौ! भगवद्विभूतिरिव प्रतीयते। परं तदनन्तरमपि सकष्टमेवात्रागतम्। दुर्गमस्तावदेष पन्था। पुनश्चैतदाश्रमागमनमप्यनल्पकुतूहलावहम्। प्रागेवास्मदागमनमवेदीदेष महात्मा। कथं ज्ञात-

मनेन ? केनापि त्वेष न सन्दिष्टः। यदि सत्यं ब्रवीत्येष तदा नूनं समुन्नतज्ञानवता भवितव्यमनेन। अलमेतावता। श्रमातिरेकात् खण्डितदेहसन्धिबन्धोऽस्मि सम्प्रति। श्रमापनयनाय शयनमपरिहार्यम्।......

परमर्धरात्रावेव विसृष्टवती मां निद्रा! सा पुनर्नायाति। ओमानन्द एवात्र कारणम्। पञ्चत्रिंशद्वर्षाण्यतीतानि तस्य दृष्टस्य। का पुनरावश्यकतासीदद्यैव स्वप्ने तदागमनस्य? विचित्रः खलु मनसो व्यापारः! सायासं स्मर्यमाणोऽप्यर्थः कदाचित् स्मृतिपदवीं नाधिरोहति। सम्प्रति तु चिरविस्मृतोऽनपेक्षितश्च जनः सहसा स्मृतिपथमुपगम्य निद्रां बाधते मदीयाम्। हन्त भोः, एष एव स्वप्नः सुहृदो मे नरेन्द्रस्य मनसि किमर्थं नोदेति? एष तु न केवलं स्वयमेव प्रगाढनिद्रागतोऽपितु नासाग्रस्वरेण मदीयामपि निद्रां बाधते। परं को नाम तस्य दोषः? तेन तु ज्ञातमपि न स्याद् यत् तन्नासाग्रमेतादृशभयावहं स्वरं जनयतीति। परन्त्वेषा तरङ्गिण्यपि कल्लोलमालाभिरुच्चैर्घोषं वितनुते। एतस्मिन्निशीथकाले स्वैरिणीयं प्रवृद्धवेगेव समाचरति। भवतु, परं मन्निद्रापहरणेन तस्याः किम्? निद्राभावाद् भृशं दूयन्तेऽङ्गानि। किं करवाणि? नास्ति काचिद् गतिः। कष्टजीवितः खलून्निद्रः।

शयनारम्भेऽप्येषा पयस्विन्यत्रैव प्रावहत्। तदा तु निद्रा झटित्येवागता। सम्प्रति सा किमर्थं नायाति? ओमानन्देनैवात्र कारणेन भवितव्यम्। अवसरेऽस्मिन् स्मृतिपथं नागमिष्यच्चेदसौ तर्हि सुखपूर्वकमस्वप्स्यमहम्। अधुना तद्विस्मरणमेव वरम्। यत्सत्यं स तु विस्मृत एवाभूत्। न जाने कुतः स्मृतिपथमवतीर्णः? भवतु, तद्विस्मरणायेदानीं गुहागतस्य तस्य महात्मन एव साहाय्यं याचिष्ये। कष्टनिवारको हि स श्रुतः तस्माज्जनात्। धिग् भोः! नाम्ना तं न जानामि। किं करवाणि? भवतु, अगृहीतनामधेयोऽप्यसावाध्यातः सन् साहाय्यं विधातुमर्हति।

अथ सद्य एव पयस्विनीनिनादः शान्तिं गतः। अहञ्च शयालुरित्येषा प्रतीतिरप्येकपद एव तिरोभूता।

  

अथैकस्मिन् प्रशस्ते द्वारे प्रविशन्तमिवात्मानं पश्यामि। किं खल्विदं द्वारम्? आम्, ज्ञातम्, काशीहिन्दूविश्वविद्यालयस्य गोपुरद्वारमिदम्। एतदभ्यन्तरे देवालया इव दृश्यन्ते। मन्येऽशेषोऽपि विश्वविद्यालयो देवालयीकृतः। अयं विद्यालयोऽयमौषधालय इयं वाटिकैते च्छात्रावासा एतानि च क्रीडास्थ-

लानि। परमेतत् किं ? स्फटिकवर्णमत्युत्तुङ्गं गगनस्पर्शस्पृहम् ? विद्यालयस्तु नैषः। अप्येषाऽन्तरिक्षान्वीक्षणशाला काचित् ? महान्तः खलु विज्ञानविदोऽनुसन्धानरता भवेयुरत्र। परं किमेतत् ? कण्ठार्पितमालया इव बहवो जना अत्रावर्तन्ते। आम्, ज्ञातम्, देवालयोऽयमिति। अथान्तः प्रविश्य भगवद्दर्शनं करिष्ये।

को नामैतेन कोलाहलाकुलेन मार्गेण गच्छेत् ? अनेनैकाकिना पथा चलामि। अतिसङ्कीर्ण उच्चावचश्चैषः। परितो लताभिः सङ्कुलोऽप्ययम्। सम्प्रति तमोऽप्यभिवर्धते। कश्चिद्धिंस्रपशुर्नापतेत्। आगत्यापि किं करिष्यति, पुरस्ताद्धि देवाधिदेवो विराजते। आगतोऽस्मि देवालयम्। कियदामोदपूर्णा कियद्दीदीप्यमाना चैषा स्थली ! अनवरतं घण्टारवः श्रूयतेऽत्र। अपूर्वमस्त्यत्रत्यं सङ्गीतकम्। अद्भुतदृश्याङ्किता खल्वेषा भित्तिः। अपि नाम नरेन्द्रो भवेदत्र ! आगतोऽस्मि सम्प्रति भगवत्सकाशम्। महान् खल्वस्य महिमा। महत्तेजःपुञ्ज इव प्रतिभात्यसौ। धन्यास्तावत् तद्द्रष्टारः। धन्योऽस्म्यहमद्य साक्षाद् भगवद्दर्शनमासाद्य।

सम्प्रति प्रदक्षिणा विधेया। कुतो न्वियमत्रैषाऽलङ्घ्या जलधारा समागता ? एतत्तीरेणैव गच्छानि। कथं तावदेतत्सर्वमुच्चावचं संवृत्तम् ? यद्वा तद्वा भवतु प्रदक्षिणा तु विधेयैव। अये, किं नु खलु क्रुध्यत्ययं श्वा ! अये, नायं श्वा, एष तु सिंहशावकः। हा, अयमत्र गजोऽप्यागतः। दृष्ट्वा मां समुन्नमयत्ययं शुण्डम्। तत्र वराहोऽप्यस्ति। देवालये तु किमर्थमागता एते ?······ अरे, न भेतव्यम्। भित्तिचित्रमात्रं हीदं सर्वम्।

अये, वामपार्श्वे गुहेयं कीदृशी ? समन्तात् पर्वतमालेव दृश्यते। तत्पादप्रक्षालनपरेयं निष्यन्दिनी। निर्जनेयं स्थली, एकाकी चाहम्। किं करवाणि ? न जाने कस्येयं गुहा ? एतदभ्यन्तरे वृकोऽपि भवितुमर्हति, भल्लूकोऽपि, वराहोऽपि, सिंहोऽपि। अथ पलायनमेव शरणम्। नरेन्द्रोऽप्यत्र नास्ति। अहो, अभ्यन्तरतो मधुरः स्वर इव श्रूयते। कश्चिज्जन आह्वयतीव मां—'सखे ! आगच्छ; विभीतोऽसि किम्; अयमहमस्मी' ति। अये, स्वरसंवादेनौमानन्द इव प्रतीयते। 'भो ओमानन्द ! गह्वरे किं करोष्येतस्मिन् ? तमोमयस्त्वयं गह्वरपथः। आगच्छानि कथम् ?' 'बन्धुवर ! मा भैषीः। शनैः शनैः पादौ निधायागच्छ।' एवमाहूतो यावत् प्रविशामि तावत् पश्याम्येकपद एव मुण्डितशिरसं देदीप्यमानभालमुन्नतघोणं स्मिताननमुत्तरीयावेष्टितदेहं कुशासनस्थं कृतध्यानोपक्रमं चोमानन्दम्।

'ओमानन्द ! अत्र त्वं किं करोषि ? एष तु देवालयः । अत्र तावद् भक्तजनाः समागच्छति विधाय च देवदर्शनं सद्य एव प्रतिनिवर्तन्ते । त्वं त्वत्र स्थायित्वेन प्रतिवसन्निव लक्ष्यसे । अपि त्वया देवालयस्यास्य पौरोहित्यं वृतम् ? मन्ये विद्याध्ययनायागतोऽस्यत्र न तु पौरोहित्याय । पुनश्चास्ति परीक्षाकालोऽतिसन्निकृष्टः । इतरे च्छात्रास्तु सम्प्रति दिवापि रात्रावपि सन्त्यध्ययनरताः स्वस्वकक्षेषु पुस्तकालयेषु वाटिकासु च । परीक्षा तूत्तरणीयैव ।'

'बन्धुवर ! नास्मि कथञ्चित् परीक्षाविमुखः । अध्ययनं तु परीक्षार्थमेव भवति । परं कीदृशी सा परीक्षा यदर्थमस्मदध्ययनं प्रवर्तेत ? अपि सैषा यस्यां खल्वध्यापकैरुक्तं पुस्तकेषु च पठितमर्थजातमुत्तरपुस्तिकासु यथावदवतार्यते परीक्षाकक्षे ? मन्ये तावदेषापि परीक्षैव । परमेषास्ति परीक्षा स्मरणशक्तेरङ्गुलिशक्तेश्च । यस्य स्मरणशक्तिरस्ति स्थिरा, अङ्गुलिचालनगतिश्चास्ति तीव्रा स परीक्षायां प्राथमिकतामाप्नोति । परन्त्ववसीयते तस्य प्राथमिकत्वमप्यत्रैव । एषा परीक्षापद्धतिस्तावद्यन्त्रवत् क्रियापरा न तु स्वच्छन्दसंज्ञानपरा । वयं तु स्मः संज्ञानवन्तः । मानवप्रसूतित्वादस्माभिस्तावन्मानवैर्मानवतरैश्च भाव्यम् । मानवत्वपदवीमलंकर्तुं यान्त्रिकव्यापारादूर्ध्वारोहणमावश्यकम् । यथा खलु यन्त्रचालनार्थं भौतिकविज्ञानमपेक्ष्यते तथैवाधिमानसतत्त्वस्य विकासार्थं मनोविज्ञानं नाम । एतदेव मनसि निधाय मयाऽध्ययनार्थं मनोविज्ञानं वृतं सविशेषं चाधीतम् । पश्य तावत्, पुस्तकालये यानि कान्यपि मनोविज्ञानविषयकाणि पुस्तकानि सन्ति तानि सर्वाण्येव मयाऽधीतान्येतेषु दिवसेषु ।'

'ओमानन्द ! कथं नु खलु त्वया पुस्तकालयादेतानि शतशोऽपि पुस्तकानि सममेवावाप्तानि यदा त्वस्माभिः सकृत् पुस्तकद्वयमात्रमेव लभ्यते ?'

'बन्धुवर ! त्वं तु यान्त्रिकीं व्यवस्थामनुपालयसि । अत ऊर्ध्वमुत्क्रान्ते सति निखिलापि यान्त्रिकी व्यवस्था वशीभूता सती साधकस्याकांक्षामनुवर्तते । आकांक्षावशात् पुस्तकानि तावदत्र स्वत एवोपतिष्ठन्ति । परं को लाभ एतैः सर्वैरपि ? संभूयाप्येतानि सर्वाणि मनस्तत्त्वं सम्यग्व्याख्यातुं न प्रभवन्ति । पाशवप्रवृत्तिमात्रधृतत्वादेतैः प्रतिपादितं मनोविज्ञानं तु मनसो बाह्यव्यापारमात्रं स्पृशति । एवं सति, कः खलु लाभः स्यादेतेषामध्ययनेन कण्ठाग्रीकरणेन वा ? एतेषु प्रतिपादितेन विज्ञानेन सर्वेषामस्मदृषीणां तपस्या नैरर्थ्यं नीता । एतेन खलु पाशवप्रवृत्तयो वृद्धिं नीयन्ते मानवश्च पशुत्वोन्मुखीक्रियते । यथा यथा भौतिकं विज्ञानं प्रसरति तथा तथा मानवमनोविज्ञानं सङ्कीर्णतां भजते । प्रेमत्यागौदार्यपरोपकारप्रभृतयो गुणाः सम्प्रति स्वार्थसाधनपरैरुपायैरभिभूयमानाः सन्ति ।

मित्रवर ! खिद्येऽहं विमृश्यैतत् सर्वम् । को नु लाभो श्रमावहेताध्ययनेनानेन । एनं विश्वविद्यालयमेव तावत् पश्य । एष तु सर्वोच्चादर्शप्रतिष्ठितं देवसरित्तीरस्थं भारतभुवो मूर्धन्यं शिक्षासंस्थानं भवेदिति मनसि निधाय महामनसा मदनमोहनमालवीयमहाभागेनैतस्यां काशीनगर्यां संस्थापितः । ज्ञानविज्ञाननिष्णाता एतद्विश्वविद्यालयनिर्गताः छात्राः सर्वत्रादर्शभूताः स्युरित्येषाऽऽसीत् , तदीयाऽऽकांक्षा । परन्तु त्वयापि दृष्टमभद्रमाचरणं ह्यो विद्यार्थिनाम् । यदा तावदेतेषां जनानां विश्वविद्यालयप्राङ्गण एवैतादृशो व्यवहारः तदान्यत्र कीदृशो भवितेत्यनुचिन्त्य भृशं दूयते मे मनः । एतादृशी चेदेतस्य विश्वविद्यालयस्य दुरवस्था तर्हीतरेषां कीदृशी भवितुमर्हतीत्यनुमातुं शक्यतेऽनत्यायासेनैव । पुनश्च यदि विश्वविद्यालयानामेतद्विधा दुरवस्था तर्हि तदनुप्राणितस्य जनसामान्यस्य स्थितिरतोऽपि भयावहा भविता । एवं मानवजातेर्भाविजीवनक्रमो निबिडान्धकाराच्छन्न इव प्रतीयते । उत्तरोत्तरमुपचीयमानं भौतिकत्वं नाम व्यात्तमुखमहोदरासुर इवास्मदभिमुखमनुदिनं प्रसरति चाकचिक्योत्पादकैः पदार्थैश्चास्मान् मुहुर्मुहुरुपच्छन्दते । एतादृशपदार्थोपार्जनार्थमस्माभिरहमहमिकापूर्वकमन्योन्याभिभवमार्गो वृतः । अहंकारलोभाद्यनुदात्तमानसवृत्त्याधृत एष मार्गः कियद्दूरमस्मान् नेष्यतीति नास्त्यज्ञातं सूक्ष्मदर्शिनाम् । मानवजातेः पुरस्तादुपस्थितां विभीषिकामेनामाकलय्य मनो मे एतस्मिन् भ्रामकेऽध्ययने मनागपि प्रीतिं न मन्यते । अथास्ति किञ्चित् प्रतिविधेयम् । किं कुर्यामित्यस्मि चिन्तारतः । एतदर्थमेव स्थलदेषास्ति मया वृता । मानवत्वदाहोन्मुखविषयाग्निशमनार्थं कूपोत्खननचिकीर्षुरहं सम्प्रति । व्रतेऽस्मिन् साफल्यं लप्स्य एवेति तु वक्तुं न पारयामि । परं यत्नस्तावदस्ति ममाधीनः । 'कर्मण्येवाधिकारो मे मा फलेषु कदाचन ।'

उक्त्वैतद् विरते तस्मिन् मया दृष्टं तद्भालपटे उदीयमानं ज्योतिरेकम् । तच्च शनैश्शनैरुपाचीयत, ओमानन्दश्च तस्मिन्नेव व्यलीयत । अहमभिभूतोऽतिष्ठम् । सहसा श्रुतिपथमागतः 'झर्झरि' ति ध्वनिः । अथ कश्चिन्मामाह्वयन्निव प्रतीतः—'नारायण ! उत्तिष्ठ, उत्तिष्ठे' ति ।

  

चक्षुषी उन्मील्य पुनरावृत्तचैतन्यो यावदितस्ततो दृष्टिविस्तारमकरवं तावदान्वमात्मानं हिमवच्छिखरस्थे नारायणाश्रमे सुप्त्वोत्थितम् । एतावता कालेन सूर्यः शिखरादुत्प्लुत्यासीद् गगनारूढः । आश्रमभूमिं नमश्चक्रुस्तद्रश्मयः । घर्मभीत्या तमः पादपपत्रपुटेषु व्यलीयत । गतसन्ध्यायां तमोनिलीन आश्रमः सम्प्रति दृष्टि-

विस्तारं ययौ। उत्तुङ्गत्वादत्रासीद् वनस्पतिवैरल्यं, परं सरित्तटं तु लतागुल्मनिलीनप्रायमेव दृष्टम्। किं हिंस्रपशवोऽप्यत्र दृश्यन्ते?' इति कुतूहलवशात् पृष्टेन महात्मनोक्तम्—'नारायण! दृश्यन्ते, परन्त्वधस्तादेव। पयस्विनीतटे तु सर्वप्रकारकाः पशव इतस्ततो भ्रमन्तोऽवलोक्यन्ते, परन्तु सन्ध्यायामेव, न च दिवा। अद्यैव खलु सूर्योदयात् किञ्चित्कालपूर्वं दृश्यमानस्य पादपसम्पुटस्य पुरस्ताद् व्याघ्रेण व्यापाद्यमानस्य मृगस्य रोदनं श्रुत्वा भृशमखिद्यत मे चित्तम्। परन्तु किं कुर्याम्? एषोऽस्ति पाशवो धर्मः। पशुरेवाहारो हिंस्रपशोः। आखेटं विना तु ते जीवितमपि धारयितुं न शक्नुवन्ति। परन्तु गुरुमहाराजस्य प्रभावाच्छिखरेऽस्मिन् कोऽपि पशुः कमपि हन्तुं नार्हति। रात्रौ तावद् व्याघ्रा अपि सिंहा अप्यागच्छन्त्यत्र। पादपस्य वामभागस्थे महति गुल्मे व्याघ्रयुग्मः समायाति निशीथे। परन्त्वद्यपर्यन्तं नाचरिता कापि हिंसा तेन। अपि नाम हिंस्रपशूनामेतेषां भोजनविधिस्तादृशः स्याद् यादृशो मानवस्य! तदा तूपत्यकेयं दृष्टादृष्टारण्यपशुजात्याकुला स्यात्। परन्तु, नारायण! का वार्ता पशोः, आविष्कृतासंख्याभ्यवहारप्रकारो मानवोऽपि पशुघातान्न विरमति। पशवस्तु सन्त्यज्ञानिनः। इन्द्रियतर्पणव्यतिरिक्तं नास्ति प्राप्तव्यं नाम तेषां किञ्चित्। मानवस्तावदात्मज्ञः। जनान्तरचिकीर्षितो मत्प्राणाघातश्चेन्मह्यं न रोचते तर्हि मयापि चिकीर्षितः प्राण्यन्तरघातस्तस्मै न रोचेत। यद्येतदपि नावबुद्धमस्माभिस्तर्हि कीदृशमस्मन्मानवत्वं कुत्र च नः पशुव्यतिरिक्तत्वम्?'

अथ कारुण्यरोषान्वितं महात्मानं समाश्वासयता मयोक्तम्—'महात्मन्! अलं विषादेन। मानवजातिस्तावदस्तित्वयात्रायां तं बिन्दुं समायाता सम्प्रति यत्र सा विकल्पहीना संवृत्ता। आदिकाले त्वल्पसंख्याकत्वान्मानवो मांसाहारबलेनैव प्राणान् धारयितुं शशाक। सम्प्रति तु सततमुपचीयमानसंख्यकेन तेन पशुवर्गो नितरां विरलीकृतः। मांसाहारप्रवृत्तिश्चेदेतेनैव वेगेन चलिष्यति तर्ह्यनतिदीर्घेणैव कालेन पशवः खलु दर्शनायापि नोपलप्स्यन्ते का वार्ता पुनरभ्यवहारस्य। यथा कश्चित् कृषकोऽन्नजातं परिसमाप्यापाततो बीजान्नमपि खादितुमुपक्रमेत, एवमेव मानवस्तावदेतावता कालेन प्रकृतिप्रदत्तां विपुलां पशुसम्पत्तिमशेषप्रायां विधाय सहस्रशः संवर्धितेन स्वकुलेन तन्मूलमप्युच्छेदयितुमर्हति। नैकपशुजातयस्तु पूर्वतरमेव नामशेषतां नीताः। पश्यतु तावद् भवानेव क्व सन्त्येकतोऽनेकार्बुदसंख्याका मांसजीविनो मनुष्याः क्व चान्यत्र तत्संख्याकप्रायाः पृथिव्यां सर्वेऽपि पशवो मिलित्वा। पशुशरीरवृद्धिस्तु दीर्घकालापेक्षा तन्मांसभक्षणं चैकाभ्यवहारपर्यन्तकम्। उत्पादनोपभोगयोर्मध्य एतद्विधे वैषम्ये

सति वस्तुस्थितिर्न शक्नोत्यात्मानं सुचिरं धारयितुम् । पश्यतु तावद् भवान् पशुजात्योपरि मानवैः कृतमत्याचारम् । मांसभक्षणं तावद् दूरे तिष्ठतु, केवल वस्त्रोपानद्भाण्डादिनिर्माणार्थं लक्षशोऽपि पशवः प्रतवर्षं व्यापाद्यन्ते । कियत्पर्यन्तावस्थायिनी स्यादेषात्याचाराश्रिता प्रवृत्तिः ? यदा नु सर्वेऽपि पशव एवमेव विनाशं प्राप्स्यन्ति तदालङ्करणप्रवृत्तिरेषा क्व तृप्तिमन्विष्यति ? उपायान्तरं सम्भाव्यते चेत् तर्हि सम्प्रत्येव किं नावलम्ब्यते तत् ?'

इत्येवं सावेशमुक्तवति मयि विरक्तोऽसौ वनवासी प्रत्यक्षत आर्द्रचक्षुः स्तब्धश्च सञ्जातः । शनैश्शनैर्नियन्त्रितकारुण्यवेगेन तेन सोच्छ्वासं वक्तुं प्रारब्धम्—'नारायण ! अवितथमुक्तं भवता । मदीयं हृदयं तु पशुकृतामेव हिंसां विलोक्य विदीर्यते । मानवेनाप्येवमेव क्रियते इति तु मनस्यपि नागतं मे । कौमारादेव लोकपरित्यागादनभिज्ञप्रायोऽस्मि सामान्यजनजीवनस्य । अस्फुटं स्मरामि यदाहं पञ्चवर्षदेशीय आसं तदा मम पितृव्येन कुतश्चिदेको मेष आनीतः । मधुरस्तद्रोमस्पर्शः खल्वद्यापि स्मर्यते मया । अवनम्यावनम्य दृष्टा तच्चक्षुषः पीतवर्णा दीप्तिरद्यापि मन्मनसि तिष्ठति । परिपार्श्वतः त्रोटयित्वा यानि दूर्वादलानि मया तन्मुखसमीपे नीतानि तेन च सुकोमलजिह्वया स्वीकृतानि तान्यपि न सन्ति विस्मृतानि । कालान्तरे स एव वराको गृहस्य पृष्ठभागे नीतो भूमौ निधाय च क्षुरिकया व्यापादितः । कियत्खिन्नोऽहमासमिति तावन्निवेदयितुं न शक्नोमि । परकीये जीवनेऽनात्मदर्शनं खलु जिघांसां जनयति पशुषु । नास्त्येतादृशी क्षमता यथा ते इतरेष्वात्मत्वं पश्येयुः । मनुष्येषु त्वस्त्येव । परं भवद्वार्तया ज्ञातं यन्मानवस्तावत् पशोरपि जिघांसावत्तरः संवृत्तः । महती खल्वियं विडम्बना । कियदज्ञानावृताः स्मोऽत्र वयम् ! कियदकिञ्चित्कराः ! का वार्ताः पशोः, अत्र त्वहं वनस्पतिष्वपि स्वत्वं पश्यामि । चक्षुषी व्यापारयतु भवानेतस्मिन्नुटजबहिर्विरूढे वटवृक्षे । यदा खल्वावामत्रागतौ तस्मिन्नेव दिवसे गुरुमहाराजेनैषोऽत्र विरोपित आवाभ्यां च निर्झरजलेन मुहुर्मुहुः सिञ्चितः । यदा यदैतस्मिन् पत्राण्याविर्भूतानि तदा तदाऽमन्दानन्दोद्रेको जातोऽस्मन्मनसि । पृथिव्या उल्लासभूतो न्यग्रोध एष सम्प्रति सर्वानेवोल्लासयति मनुष्यानपि पशूनपि पक्षिणोऽपि । शतशोऽपि पक्षिणः पादपेऽस्मिन् सनीडमनीडञ्च, दिवापि रात्रावपि सानन्दं निवसन्ति, एष च मोदतेतरां क्रोडीकृत्यैतान् । पश्यतु भवान् न्यग्रोधारूढां लतामप्येनाम् । यतः प्रभृत्येषा भूतलादङ्कुरिता ततः प्रभृत्येवाहमेनां सविशेषमवलोकयामि । एषा न तु दक्षिणायां दिशि प्रसृता न प्राच्यां नैव प्रतीच्याम् । कुतूहलवशान्मयैषा नैकवारं दिगन्तरोन्मुख्यपि कृता । परन्तु सर्वथैषोत्तरस्यामेव

दिशि प्रवृत्ता । तत् किमर्थमिति मया पूर्वतरं नावगतम् । सम्प्रति तु स्पष्टं प्रतीयते यदध्यवसाय एष न्यग्रोधाश्रयनिमित्तक इति । अपरिमेयरहस्यनिर्भरैषा जिजीविषा वनस्पतिस्वपि सोद्देश्यतां प्रकटयति । अचक्षुषोऽप्येते सचक्षुष इव वर्तन्ते । 'परोपकाराय फलन्ति वृक्षा' इति या व्यवस्था क्रान्तदर्शिनाकविना वनस्पतिषु दृष्टा सा नास्त्यर्थवादमात्रम् । तेन तु वनस्पतीनां निस्स्वना वाणी यत्सत्यं मुखरीकृता । महच्छरण्यं खल्वेते वनस्पतयो हिमवत्प्रदेश एतस्मिन् । नाभविष्यंश्चेदेते कोऽवस्थातुमशक्ष्यदत्र ?'

एतस्मिन्नेवान्तरे समुपस्थितो नरेन्द्रः सहसाऽवोचत्–'महात्मन् ! सत्यमुक्तं भवता । एते वनस्पतय एव प्रदेशेऽस्मिन्नादिमानवनिवासकारणत्वं गताः स्युः । आरुह्यारुह्य तेषु तैरात्मा रक्षितः स्याद्धिस्रपशुभ्यः । एतेषामेव फलानि मूलानि च खादित्वा तैर्जीवितं यापितं स्यात् । गुहावासमांसभोजने च तैः सङ्कटापन्नैरेव स्यातां स्वीकृते । नाभूवंस्ते भवादृशा ध्यानिनो ये खलु निर्विघ्नध्यानार्थं गुहासु निवसेयुः । तैस्तु हिंस्रपशुभ्य आत्मरक्षणाय शीतातपदुर्दिनेभ्यश्च परित्राणायैता वृताः स्युः । अन्विष्टास्त्वेता आखेटपशूनामनुसन्धानक्रमेण भवेयुः । तैरनुसृतो यदा कश्चिदाखेटपशुर्गुहायां कस्यांश्चित् प्रविष्टः स्यात् तदा प्रविश्य तस्यामादिमानवेन न केवलं वराकोऽसौ व्यापादितः खादितश्च भवेदपितु गुहा सा निवासाय स्वायत्तीकृतापि स्यात् ।'

नरेन्द्रस्य वचः श्रुत्वा महात्मा साट्टहासमुवाच—'नारायण ! अवितथा भवदीयोक्तिः । भवान् मन्येत नामाहमप्येवमेवाखेटपशवानुसन्धानक्रमेणागतोऽस्म्यत्रेति । तदपि नास्त्यनृतम् । स्मरामि खलु गुरुमहाराजस्य कथयतः 'अस्मदिन्द्रियाणि पशवः सन्ति । एतान्येव पशुवदाचरणाय प्रेरयन्त्यस्मानि'ति । मन्ये एतेषामेव मारणाय वयं गुहामागता एनाम् । गुहानिवासः खल्विन्द्रियव्यापारनियामकः । परन्तु नियमितेन्द्रियव्यापारेणापि जनेन शरीरयात्रा तु विधेयैव । सा च भोजनं विना न सम्भाव्यते । अस्मद्भोजनं च लभ्यं पशुभ्यो वनस्पतिभ्यश्च । भवदभिमतस्यादिमानवस्यापि भोजनव्यवस्था पशुवनस्पत्याश्रिता स्यात् । मन्ये भोजनार्थमेव तेन पशवो हता वनस्पतयश्चोत्पाटिताः । तैस्तावदनुमातुं नापारयत यद् हता पशुजातिरुत्पाटितश्च वनस्पतिः कदाचिच्छून्यत्वं गच्छेतामिति । दिवसेषु तेष्वेतयोरुभयोरपि विपुलत्वान्मानवशक्तेश्च परिमितत्वादेतस्याः शङ्कायाः कृतेऽवसरोऽपि न स्यात् । अवसरे सत्यप्यज्ञानवशात् त एतयोर्दुष्परिणाममप्यनुमातुं न शक्नुयुः । एतस्मादज्ञानादेव ते स्वतो निराकृताः स्युः । केचित् तावद् हिंस्रपशुभिर्व्यापादिताः स्युः शेषाश्च भोजनाभा-

वादन्यत्रगामिनः। नारायण ! अप्येतन्न सम्भाव्यते यद् गुहागतान्यस्थीनि तदीयानि स्युर्ये खलु तत्प्रविष्टेन व्याघ्रकुलेन केनचित् सममेव व्यापादिताः ?'

'महात्मन् ! विभीतोऽस्म्येतच्छ्रुत्वा । कदाचिद् व्याघ्रकुलमेतादृशं नापतेत् पुनरप्यत्रे' त्युवाच सशङ्कितो नरेन्द्रः ।

'नारायण ! मा भैषीः । नास्ति सम्प्रत्येतादृश्याशङ्का । स्वयमेव पश्यतु तावन्निवसन्नप्यत्रैतावता कालेन किमपि क्षतोऽस्मि किम् ।'

'भगवन् ! कथं खल्वेतदि'त्यपृच्छत् किमप्याश्वस्तो नरेन्द्रः ।

'शृणोतु' इति वक्तुमारेभे किमप्यभिवर्धितगाम्भीर्यो महात्मा, 'वयं त्वत्र प्रकारान्तरेणैव प्रतिवसामः। अस्माभिस्तावत् कोऽपि पशुः कदापि हन्तुं चिन्त्यतेऽपि न । नारायण ! किमर्थं प्राणिनं कमपि हन्यात् ? कोऽस्ति तत्र न्यायः ? यथा खलु वयं जिजीविषामस्तथैव पशवोऽपि । जिघृक्षन्तं जनं दृष्ट्वा तेऽपि तथैवापसरन्ति यथा वयं मनुष्याः । हर्षं विषादं वा प्राप्य ते तथैव हृष्टा विषण्णा वा भवन्ति यथा वयम् । अथ तेषां वधस्तथैव न्यायविरुद्धो यथास्माकीनः ।'

'महात्मन् ! अस्तु तावदेतदि'ति प्रारभत सस्मितं नरेन्द्रः । 'मन्ये, न कश्चित्पशुर्भवद्भिर्व्यापादितः स्यात् । क्व तावत् पशुमारणसदृशं घृणास्पदं कर्म क्व च महात्मनां पूता वृत्तिः । परन्तु यदा भवान् परिधानस्य कृच्छ्रत्वात् शीतार्तो भवति तदा किं कदाचिद् भवतो मनसि नायाति यन्मृगः कश्चिन्मृत्युं प्राप्नुयाद् व्याघ्रेण वा व्यापादितः स्यादि'ति ?

एतद्वचः श्रुत्वा कर्णौ पिधाय महात्मनोक्तम्—'शान्तं पापम् ! नारायण ! मन्मनस्येतत्तु जायते यद् यदाहं मृतः स्यां तदा पशोः कस्यचित् क्षुधापूर्त्योपादानः स्यामिति । परन्तु कश्चित् पशुर्व्यापादितः सन् चर्म प्रदद्यान्मह्यमित्येष भावस्तावद् भवत्सन्निकर्ष एवोपजातो न च मदीये मनसि । नारायण ! किमर्थमेतच्चिन्तयित्वाऽऽत्मावपातः कुर्यात् ? प्रकृतिस्तु सुदक्षिणा । अस्मज्जीवनसम्भावनापि तदौदार्यप्रसूतिरेव । यया खलु जीवितं प्रदत्तं तयैव जीवनसाधनमपि नियोज्यम् । जीवनप्रदायिन्या तया जीवितवत्तरया बुद्धिप्रदायिन्या च बुद्धिमत्तरया भवितव्यम् । अथ तदीयां व्यवस्थामुल्लङ्घ्य स्वार्थसम्पादनप्रयासः खलु प्रशस्तबुद्धेरवमानपूर्वकं हीनबुद्धेरवलम्बनकल्पम् । सा तु वैश्वबुद्धिप्रचालितास्ति यावद्वयं स्वार्थबुद्धिनिमग्नाः स्मः । अस्माकीनो निर्णयः स्वार्थसाधकोऽपि सन् परार्थघातको भवितुमर्हति । अहंकारप्रेरितत्वाद् वैयक्तिकी बुद्धिः पदार्थं नावेक्षते ।'

'महात्मन् !' इति नरेन्द्रेण मध्यत एव पुनर्वक्तुं प्रारब्धम्, 'अत्र मदीयं मतं भिन्नमेव । सन्तु नाम सामान्यजनाः स्वार्थपराः परार्थघातकाश्च । परं जगति विज्ञानविदोऽपि सन्ति ये तावत् स्वबुद्धिचालिता अपि सन्तो निकामं परार्थसाधका भवन्ति । तैस्तु प्रकृतिविरुद्धमपि गत्वा जनसामान्याय महत्सौविध्यमुपार्जितम् । नैकप्रकारकान् विघ्नानपसार्यापसार्य प्रकृतिनिलीनरहस्योद्घाटनपूर्वकं महज्जनहितं सम्पादितं तैः । क्व त्वादिमो मानव आसीत् प्रकृतिपरवशः क्व च साम्प्रतिको मनुष्योऽस्ति प्रकृतिस्वामित्वेऽधिष्ठितः । विगतेषु त्रिंशद्वर्षेष्वेव जगति विज्ञानविद्भिरेतादृशो विपरिणाम आनीतो यथा लोके प्रतिनिवर्त्य पृथिवीतलमभिज्ञातुमपि न शक्ष्यति भवान् । यदि प्रकृतिपरवशतयैवैष कालोऽपि गमितोऽभविष्यत् तर्हि सम्प्रत्यप्यैतत्सौविध्यविहीना अभविष्याम वयम् ।'

इत्येवं नरेन्द्रे विरते सति मनाक्स्मिताननो महात्मोवाच—'नारायण ! गभीरः खलु भवदीयः प्रश्नः । एष तावज्जीवनविधिपरः । जीवनविधिश्च प्रतिव्यक्ति विभिद्यते । नागरजीवनाभ्यस्ताभ्यां भवद्भ्यामत्रत्यो जीवनविधी रुचिकरो न स्यात् । मया तु यत्सुखमत्रानुभूयते तत् खलु जनसामान्याकल्प्यम् । वयमपि भोजनार्थं फलान्याहरामः कन्दमूलानि चोत्खनामः । फलाहरणाद् वृक्षो मनागपि न क्षीयते । परोपकारायैव ते फलन्ति । अहो बत भोज्यपदार्थजातमस्माभिः फलवद् हिंसारहितेनैव विधिनोपार्जितं स्यात् ! कृषिकर्म तावदेतद्विधमेव । कियच्छोभनं स्याच्चेदशेषापि मानवजातिः पशुघातवर्जनपुरस्सरं कृषिकर्मणैवाहारं प्राप्नुयात् । एतावता हिंसायाः परिवर्जनं भविता पशुजात्युच्छेदपरिहार आहारदूषणनिराकरणं च । भोक्तृभोज्ययोर्मध्ये विवेकस्तु करणीय एव । प्रक्रियया कयाचित् परिचाल्यमान एव भोज्यपदार्थ आत्मसात्क्रियते भोक्त्रा । एवमेव भोज्यं भोक्ता भवितुमर्हति । भोज्यपदार्थे प्रकृत्यैव भोक्तृधर्मिणि सति पाचनव्यापारोऽपार्थको भविता । परमार्थतः पशुशरीरं तु मानवशरीरकल्पमेव । उभे अपि समकोटिकपदार्थनिर्मिते समकोटिकभावाप्लाविते च । अथ मानवेन पशुमांसभक्षणं खलु समकोटिकभावहिंसनेन सह समकोटिकतत्त्वविषमीकरणदोषावहम् । एवं व्यवहरता मनुजेन तावत् प्रकृतिदेव्याः सृष्टिव्यापारे कियान् व्याघात उपजनितः स्वकीयभावनायाञ्च कियत्क्रूरत्वमानीतं स्वकीये शरीरे च कियन्तो दोषा उपनिबद्धा इति वयमनुमातुमपि न पारयामः । एतस्मात् कारणादसौ प्रकृतिविध्वंसकः, स्वभावेन क्रूरः, शरीरेण च रुग्णः संवृत्तः । कियती दुरवस्थेयम् ! कियान् पातकोऽयं व्यापारः ! कियद्विवेकशून्यत्वमिदम् !'

एवमुक्त्वा महात्मासौ सावेशं व्यरमत, नरेन्द्रश्च श्रुत्वा तत् स्तब्धोऽभूत् । अहमपि तदुपस्थापिततर्कस्याश्रुतपूर्वत्वाच्चकितोऽभूवम् । क्षणमात्रं विरम्यासौ पुनरपि वक्तुमारेभे—'नारायण ! वानस्पत्याहारे तावदेतादृशी कापि दुरवस्था नास्ति । वनस्पतिर्हि सुतरां भिन्नगुणात्मकः । पृथिव्यामेतस्यां वनस्पतिरूपेणैव सृष्टिरारब्धा प्राणिनाम् । तदुपादान एव जातः पशुरपि मानवोऽपि । पशूपादानो मानव इति मतं त्वनर्गलम् । यतस्त्वं मानवस्तु पशुसमकालिक एव । केवलमध्यात्मसंवर्धनशक्त्यासौ पशुभ्यो विशिष्यते । शरीरेण त्वसौ पशुरूप एव । अथाहाराय यथा पशुर्वनस्पतिमपेक्षते तथैव मानवोऽपि तमेवापेक्षेत । वनस्पतिस्तु पश्वादिनिमित्तः । गुणात्मकत्वेन हीनतरत्वादसौ पशुमानवयोरुभयोरेव शरीरं प्राप्योत्कर्षमेव भजते । तदाहारे नास्ति क्रूरत्वं नैव दूषणाशङ्का । असौ हि पाचनक्रियया परिवर्त्यमानः सन्ननायासमेवात्मसात्क्रियते ।'

'महात्मन् ! तिष्ठतु तावद् भवानि'त्यवोचत् सहसा नरेन्द्रः—'किमाहाराय सिंहोऽपि वनस्पतिमेवापेक्षते, व्याघ्रोऽपि······? महात्मन् ! यथा खल्वेते पशवो न सन्ति वनस्पतिभोजिनस्तथा सन्ति मनुष्या अपि । अथ वानस्पत्याहारिणां पशुविशेषाणामौपम्येन किं सर्वेऽपि मानवा निरामिषभोजनाय प्रेर्यन्तेऽत्र भवता ?'

'वरम्' इत्यवदत् किमपि तीक्ष्णीकृतस्वरो महात्मा—'केचित् पशवस्तावन्मांसभोजिनः सन्ति । परं ते सन्त्यल्पतराः, संख्या च तेषामस्त्यनुदिनमपकर्षोन्मुखी । नारायण ! अपि न लक्षितं भवता यन्मृगगोमृगशशकप्रभृतयः पशवस्तावद् यत्र क्वापि प्राप्यन्ते परन्तु, का वार्ता व्याघ्रस्य, वृका अप्यद्यानायासं दर्शनाय नोपलभ्यन्ते ।'

'एतत् तु सत्यमि' त्युवाच नरेन्द्रः—'बाल्यकाले त्वहं पशूनेतान् स्वकीये ग्रामे यत्रतत्राप्यपश्यं, परमद्य ते क्वापि न दृश्यन्ते ।'

'नारायण ! एतावतानुमातुं शक्यते कियत्पर्यन्तमुच्छेदोन्मुखा मांसजीविनः पशव इति । तादृश्येव स्थितिर्भविता मांसाहारिणां जनानाम् । एतेऽपि सन्ति द्रुततरविनाशशीलाः ।'

एतच्छ्रुत्वा नरेन्द्रे विचारमग्ने सति मयि चौत्सुक्याकुले, महात्मा पुनरपि वक्तुमारेभे—'नारायण ! एतस्मादपि कारणाद् वयं कन्दमूलफलमात्राशनाः स्मः । ननु वदेच्चेत् कश्चिद् यत् कन्दमूलोत्खननमपि नास्ति सर्वथाऽहिंसात्मकमिति, तर्हि मयोच्यते यद्विकारस्तावद् द्विविध उच्छेदपरः संरक्षणपरश्च । यदि कश्चित्

काष्ठक्रेता प्रदेशेऽस्मिन्नागच्छेद् वृक्षांश्चाविवेकपूर्वकमुत्पाट्योत्पाट्य नयेत तर्हि तद्व्यापारजनितो विकार उच्छेदपरो भविता । एवं तेनाशेषमपि प्रदेशं पादपहीनं कर्तुं शक्यते । परन्तु...... '

एतत्पर्यन्तं महात्मन्युक्तवति तद्वचसो युक्तियुक्ततां चावेक्ष्य मया सहसोक्तम्—'महात्मन् ! अवितथा भवदीयोक्तिः । सौभाग्यवशात् काष्ठक्रेता कश्चिन्नागतोऽत्र । अत एव प्रदेशेऽस्मिन् दृश्यते हरीतिमा, प्राप्यते पादपच्छाया, विचरन्ति वन्यपशवः, प्रवहन्ति जलधाराः, निवसन्ति च महात्मानः । आगते तस्मिंस्तु नगराजो विवस्त्रो भविता, पक्षिणां नीडमुच्छिन्नं भविता, पशवः कालकवलिता भवितारः, जलधारा विलुप्तमार्गा भवितारः, महात्मानश्चोच्छिन्नगुरुशिष्यपरम्परा अदर्शनं गन्तारः । हिमवत एव प्रदेशान्तरेषु केषुचिदेतत् खलु संवृत्तमेव यत्परिणामस्तु लोकैः साश्रुपातमुपभुज्यते सम्प्रति । तत्र तु पादपाभावाद् वृष्टिरनियमिता, भूस्खलनाच्च नद्यो विलुप्तमार्गा जाताः । फलतः प्रतिवर्षं सहस्रशोऽपि प्राणिनस्तत्र कालमुखे निपतन्ति । एवं महती दुरवस्थाऽऽनीतैतैः काष्ठलुब्धकैस्तत्र । सैव दुरवस्थात्रापि नानीता स्यादेतैर्लुब्धकैरिति विमृश्य हिमस्पृष्टमिवात्मसरोरुहमुत्पश्यामि !'

विषण्णं मामवलोक्य महात्मावादीत्—'नारायण ! अलं विषादेन । नैवं भवितात्र । विषयेऽस्मिन्नस्ति व्यवस्था कृता महर्षिणा केनचित् । गुरुमहाराजेन तावदेकस्मिन्नवसरे उद्घाटितं यद् यः कोऽपि काष्ठक्रेता भूभागेऽस्मिन् वृक्षोत्पाटनायागमिष्यति सद्य एवासौ मृत्युमुखे पतिष्यति । अहमपि म्रियमाणान् वन्यजन्तुभिश्च खाद्यमानान् नैकान् काष्ठव्यापारिणः पश्याम्येतस्मात् स्थलात् काले काले । नारायण ! कारणकार्यपरम्परया नियन्त्रितोऽयं लोकः । यः खलितरान् हन्ति स एवमेव हन्यते । वनस्पतयोऽपि जीवनतत्त्वानुप्राणिता भवन्ति । वागिन्द्रियविहीनत्वात् ते किमपि वक्तुं न शक्नुवन्ति, हस्तपादहीनत्वाच्च न प्रतिकर्तुम् । एवंविधांस्तान् यः कोऽपि हन्ति घातयति वा स खलु दैवेन हन्यते । दैवशक्तिस्तावत् तेष्वपि तथैवानुप्रविष्टा यथा मानुषेषु । मानवमधिकृत्य धर्मप्रवर्तकैः कैश्चित् प्रोच्यते यदसौ खल्वीश्वरसृष्टः, ईश्वरानुप्रविष्टः, ईश्वरसंरक्षितश्च । अथ प्रकृतिस्तेन सर्वथोपभोग्येति । एतन्मतमनुसरन् मानवः सम्प्रत्युपभोगक्रमेण प्रकृत्या उच्छेदनेऽपि निरतोऽस्ति । यदा कश्चिन्मनुजो हन्यते तदा नु सर्वत्र हाहाकारः क्रियते, परन्तु यदा कश्चित् पशुर्हन्यते पादपो वोत्पाट्यते तदा कोऽपि नावधत्ते । तत् किमर्थम् ? अपि नाम सशक्ततैव मनुजमीश्वरस्य सान्निध्यं प्रापयति ? तद्बुद्धिबलं वा तमीश्वरेण सह योजयति ? असंशयमेषा

व्यवस्थास्ति मानवकृता । यत्सत्यमीश्वरस्तु भावमवेक्षते न च शक्तिम् आत्मोत्सर्गमभिस्निह्यति न तु परसत्त्वलुण्ठनकौशलम् । ईश्वरस्तु वनस्पतिष्वपि तथैवानुप्रविष्टः स्याद् यथा खलु मनुजेषु । वनस्पतयस्तावदात्मस्थं तमनुसन्धातु न शक्नुवन्ति । तथैव पशवोऽपि । एवं सति, अप्यस्त्येष मानवीयो धर्मो यद् यः कोऽपीश्वरमनुसन्धातुमसमर्थः स मारणार्ह इति ? नैवं कथञ्चित् । ते तु तथैवास्माभिः संरक्षणीयाः यथा मूको बधिरः पङ्गुर्वा कथञ्चित् । अथ सर्वथा रक्षणीयो वनस्पतिः । अन्यथा तु तद्विलोपानन्तरं मानवजिघांसा विषयान्तरमनवाप्य मनुष्यमेव प्रहरिष्यति । भोः सद्बुद्धयः ! उत्तिष्ठत दुर्वृत्तिमेनां च निरुन्धत । इदानीमप्यस्त्याशादीपो ऽवशिष्टः । किं करिष्यथ यदैषोऽपि निर्वापितो भविष्यति ? प्रकृतिं रक्षत, तामुज्जीवयत, जीवनवैषम्यं चापसारयत, अन्यथा मानवजीवनप्लवो विप्लुतो भविते'ति ।

  

एवं विचारनिमग्नाभ्यामावाभ्यां महात्मनः सन्निधौ सुचिरं स्थितम् । एतावता कालेन सूर्यरश्मिः प्रचण्डतां भेजे । पक्षिणां कलरवो व्यपेतमाधुर्यो जातः । घर्मसंसर्गात् सरिज्जलं रजतमयीमाभामवाप । 'सम्प्रति पशुभयमपगतम् । मार्गः स्पष्टः सञ्जातः । अर्थषिकेशं निवर्तितव्यमि'ति मया निवेदिते सति नरेन्द्रेणापि सहमतिः प्रकटिता । गमनोत्सुकावावां दृष्ट्वा महात्मावदत्—'नारायण ! आश्रमवासपरिश्रान्तौ स्तः किम् ? एतद्विधाश्रमादेव मानवसंस्कृतिरारब्धा; अत्रैव पर्यवत्स्यति । अतोऽपसृत्य नास्ति चिरस्थायिसुखस्याशा क्वचित् । मयापि तावन्नागरं जीवितं यापितम् । मत्सहयोगिब्रह्मचारिणा तु ततोऽपि सम्पन्नतरं जीवितमतिगमितम् । तदुपभुक्तं नागरं जीवितं तावद् बहूनामीर्ष्याविषयः स्यात् । अस्त्यात्मजीवनक्रमस्तेन काले काले मह्यं निवेदितः । यत् खल्वितरेषामभिलषितं स्यात् तदेव परित्यज्य तेनात्राश्रमनिवासो वृतः । तिष्ठतामत्र कानिचिदपराण्यहानि, अथ गमनायापि मनो न करिष्यत' इति ।

'महात्मन् !' उक्तं मया—'अवितथं खलु भवदीयं वचः । आश्रमाकर्षणमेवाकलय्याहं गन्तुकामोऽस्मि सत्वरमतः । परन्त्वाग्रहश्चेद् भवदीय एतादृशस्तर्ह्यपरमप्येकं दिवसं तिष्ठावोऽत्र । न जाने नरेन्द्रः किं चिन्तयति ?'

'अहं तु सर्वस्वेन भवन्तमेवानुसरामी' त्युवाच नरेन्द्रः—'यदा भवान् गमनोत्सुको दृष्टो मया, तदाहमपि गमनोत्सुकोऽभवम् । अन्यथा त्वत्रैवावस्थानं रोचते मह्यम् । पावनः खल्वेषोऽरण्यवासः ।'

अथ परिपार्श्वभूमेरवलोकनार्थमितस्ततः क्रमणमारब्धमावाभ्याम् । परन्तु शिलोच्चयशिखरे क्व नु प्रक्रमेत कश्चित् ? यत्र क्वापि पादन्यासः क्रियते, भूमेरुच्चावचविन्यासाद् भयमेवोपजायते हृदि । 'नरेन्द्र ! क्व नु गन्तव्यम् ? निवर्तनमेव श्रेयस्करम् । पश्य तावदेतान् गह्वरान् ! न जाने कीदृक्पशवः संच्छन्ना एतेषु ? वेपते मे हृदयम् । निवर्तयाव सत्वरम्' ।'

'बन्धुवर ! अलं भयेन । महात्मा तु सन्निहित एव । तस्य गुरुमहाराजोऽपि तिष्ठेदत्र क्वचित् सूक्ष्माकारेण ।'

'आम्, स्मृतम् । न स्याद् भयकारणं किञ्चित् । एहि तर्हि पश्याव कीदृशीः खल्वेता गुहाः ।'

एवमुक्त्वा यावदग्रसरोऽभवं तावदपश्यमूर्णनाभितन्तुतता नैका गुहा इतस्ततो विन्यस्ताः । ऊर्णनाभितन्तुस्तु जनशून्यत्वमसूचयत् तासाम् । एका तु तद्विधैवालक्ष्यत यद्विधा तावदपरस्मिन् दिने पर्वतमालाभ्यन्तरतः प्रवाहिण्याः प्रस्रविण्यास्तीरे दृष्टा ।

'मन्ये तादृश एव महात्मा कश्चिन्निवासं चकारात्रे' त्यवदत् सहसा कुतूहलोत्फुल्लचक्षुर्नरेन्द्रः ।

'भवेन्नाम । सम्प्रति त्वेषा चिराज्जनशून्येव लक्ष्यते । विस्मयावहं त्वेतदस्ति यदेतादृश्येव गुहा गतरात्रौ मया स्वप्ने दृष्टा यस्यां मदीयः सुहृन्न्यवसद् विश्वविद्यालयपरिसरे । तत्र तु सा शिवालयासन्नाऽऽसीत् परन्त्वत्र शिवालयस्य नाममात्रमपि न विद्यते । न जाने कुतश्चित् साम्यमेतदाकलितम् ? स्वप्नस्तु विभ्रमावहो भवति । परन्तु विभ्रमोऽपि सर्वथाऽकारणो न भवति । स्वप्ने निराधारं किञ्चित् कथं प्रतिफलेत् ? क्व विश्वविद्यालयः क्व च पुनर्गह्वरस्थ ओमानन्दः ! चिराद्वियुक्तोऽस्मि तस्मात्, तथापि तत्स्मृतिर्न जाने किमर्थं पुनः पुनर्बाधते माम् ? तमेवाधिकृत्य मुहुर्मुहुः स्वप्नायितं मया रात्रौ । प्रत्यभाद् यथाहं तेनैव सार्धमालपामि विश्वविद्यालयपरिसरे । पूर्वतरं तु महात्मना सह वार्तालापपरेण मया विस्मृत इवासीदसौ । सम्प्रति यदा प्रभृति गुहामेनां दृष्टवानस्मि तदा प्रभृत्येव मुहुर्मुहुः स्मृतिपथमायात्यसौ निरुपानत्पादः पिनद्धजानुपर्यन्ताधोवस्त्र उत्तरीयमात्रपरिहितस्कन्धदेशो विवस्त्रोदरभागः त्रिपुण्ड्रालङ्कृतभालो मुण्डितशिरस्को दीर्घापाङ्ग उत्तुङ्गनासिकः प्रलम्बकर्ण ईषदुपजातकूर्चश्मश्रुर्हस्तधृतकांस्यपात्रो वामस्कन्धावलम्बितयज्ञोपवीत उन्नमितगुल्फो मनाक्चालिताधरोष्ठो गङ्गातटाद्विश्वविद्यालयोन्मुखं सत्वरचालितपादो

गमनागमनपरैर्जनैश्च साश्चर्यमालोक्यमानः। मनसि जायते यदागामिरात्रावेतस्यामेव गुहायां निवसानीति। कच्चिद् दृष्टिपथमागच्छेदसौ। हा धिक्, दिवास्वप्ननिमग्नोऽस्मि सहसा। परिश्रान्तोऽस्मि सम्प्रति। आश्रमपदमेव गन्तव्यम्। विश्रमितुमिच्छामि तावत्।'

एतावता कालेन दिवाकरोऽपि गगनान्निवर्तमानोऽदृश्यत। सान्ध्यच्छाया दूरपर्यन्तं प्रासरत्। नीडोन्मुखमुड्डीयमाना अलक्ष्यन्त पतत्त्रिगणाः। आवाभ्यामप्याश्रमोन्मुखं प्रचलितम्। निर्वर्तिते सति 'नारायण! दूरपर्यन्तं प्रभ्रमितं किमि'त्युवाच स्निग्धदृष्टिर्महात्मा।

'नातिदूरम्। अत्रैवेतस्ततोऽभ्रमाव। आश्रमपदादनतिदूर एव सन्ति काश्चिद् गुहाः। ता अप्यवलोकिताः। सम्प्रति परिश्रान्तोऽस्मि। विश्रमितुमिच्छामि।'

'नारायण! विश्रम्य भुज्जतां किञ्चित्।'

'महात्मन्! मयि तु मनागपि बुभुक्षा नास्ति। नरेन्द्रः किञ्चिद् गृह्णीयात्।'

'न किञ्चिदपी' त्यवददसौ, 'यदा प्रभृति कन्दमूलाशनोऽस्मि तदा प्रभृति न जाने बुभुक्षैव क्व गता। सर्वथा तृप्तिं गतोऽस्मि। सम्प्रत्यवबुद्धं मया कथं खलु किञ्चिदकुर्वाणा अपि महात्मान एते हिमवत्प्रदेशेष्वेतेषु सानन्दं निवसन्ति। सकृदेवोपभुक्तं कन्दमूलं न जाने कत्यहानि बुभुक्षां वारयितुमर्हति। एतादृशं कन्दमूलं चात्रानायासमेव प्राप्यते। लोके तूदरपूर्त्यर्थं भृशं श्रमोऽपेक्ष्यते। अत्र यदा प्रकृतिदेव्यैवोदरपूर्तिर्विधीयते तदा श्रमस्य काऽऽवश्यकता? कियत् सुखावहं तावदत्रत्यं जीवितम्!'

'नारायण! अवितथं भवदीयं वचः। परं चिन्तयतु तावत् किमर्थं स्यात् प्रकृतिदेवी पक्षपातिनी। लोकापेक्षया त्वत्रत्यमेव जीवितं स्यात् कष्टबहुलतरम्। आदिमानवकृतपलायनेन प्रमाणीक्रियत एतत्। तथापि यदि लोकजीवनं दुःखबहुलं संवृत्तं तत्तु दुष्कर्मजन्यं स्यात्। यथा खलु लोकविश्रुतकथायां प्रतिदिनमेकसुवर्णाण्डदायिनी कुक्कुटी सकृदेवाण्डजातेप्सुना स्वामिनोदरोत्पाटनपूर्वकं मृत्युं प्रापिता तथैव प्रकृतिकुक्कुट्या उदरोत्पाटनपरेण मनुजेनापाततो न केवलं स्वाभाविकी जीवनव्यवस्था विघटिताऽपित्वात्मानमेव घोरे नैराश्ये निक्षिप्तम्। प्राकृतविधानोल्लंघनपूर्वकं कोऽपि प्राणी चिरन्तनं सुखमवाप्तुं नार्हति। एवं कुर्वता सुखेप्सुना मनुजेनैतावती जनवृद्धिः कृता यथा न केवलं पशुपक्षिण

एवोच्छेदद्वारे नीता अपित्वपरिमितसङ्ख्याकजनानामुदरपूर्त्यर्थं कृत्रिमोर्वरकप्रयोगेण भूमेरुत्पादनशक्तिरपि क्षयं प्रापिता।'

'महात्मन् ! आश्चर्यजनकं खलु भवदीयं लोकज्ञानमि'त्यवोचन्नरेन्द्रः, 'कुतो नु सर्वमेतज्ज्ञातं भवता ?'

'नारायण ! केचिद्विचारशीला जना अत्राप्यागच्छन्ति काले काले। तेषां मुखादेतद्विधविध्वंसकारिप्रयोगाधिकृतां वार्तां श्रुत्वा लोकव्यवस्थापकानामदूरदर्शित्वोपरि कारुण्यमुपजायते। अल्पमतिभिरेतैर्हि दूषकद्रव्यप्रयोगेण भूमिर्दुष्यते, जलं दुष्यते, वायुर्दुष्यतेऽथ च जनजीवनं विनाशोन्मुखीक्रियते। एत एव जनाः पार्वत्यारण्यमप्युच्छेत्तुकामाः श्रूयन्ते। परन्तु गुरुमहाराजस्य प्रभावादेतस्यां दुर्वृत्तौ तेऽत्र कृतकार्यतामवाप्तुं नार्हन्ति।

'नारायण ! चित्तवृत्तेरनियन्त्रितत्वमपि महाशनम्। ध्याननिमग्नत्वादस्मदीया बुभुक्षा स्वल्पाहारतुष्या भवति। आः, स्मारितोऽस्मि, मदीयो ध्यानकालः समागत इति। भवद्भ्यां च सम्प्रति विश्रमितव्यम्।'

एवं महात्मनि प्रवचनाद्विरते सति स्वापेच्छया बाधितोऽहमुत्थाय पर्णशालैकदेशे कटस्योपरि शयनमुपाक्रामम्।

  

'सुतरां प्रशस्तः खल्वेष राजमार्गः। कियता वेगेन धावन्ति यन्त्रचालितानि यानानि ! एतेषां किञ्चिन्नापतेन्ममोपरि। अथोच्चतरेण मार्गेण चलानि। बहवोऽप्यन्ये जना एतेनैव मार्गेण चलन्ति। मनोहरास्तावदेता अट्टालिकाः। अहो, सर्वा अप्येताः पिङ्गलवर्णा एकरूपाश्च ! किं नाम नगरमिदम् ? अदृष्टपूर्वमिव लक्ष्यते। नाभिज्ञातुं पारयामि। अथ विपणिकापट्टकेऽवलोकयानि। 'जयपुरमि' त्यस्ति लिखितम्। रमणीयं खल्वेतन्नगरम्। परं किमर्थमहमागतोऽस्म्यत्र ? नास्ति कश्चिन्मदीयोऽत्र। भोः, को नु खल्वेष आह्वयते मां गवाक्षात् प्रसारितहस्त आकुलाकुलकेशो वर्तुलकपोल उन्नतोत्तमाङ्गो विशालाक्षो रक्ताधरोष्ठो रक्ताभाग्रहस्तो युवा ? मधुरः खल्वस्य स्वरः। स्वराकृतिभ्यां चैष चिरपरिचित इव प्रतिभाति। परन्तु को नु खल्वत्र मम परिचितः स्यात् ?'

'बन्धुवर ! आगच्छ। अलं शङ्कया। ओमानन्दोऽस्म्यहम्।'

'ओमानन्दोऽसि त्वं, मदीयं मित्रम् ? तर्हि त्वामेतदवस्थं किं पश्याम्यहम् ? त्वया तु मुण्डितशिरसाऽपचितकपोलेन त्रिपुण्ड्राङ्कितोत्तमाङ्गेन च भवितव्यम्। कश्चिदपर ओमानन्दोऽसि किम् ?'

'बन्धुवर ! मैवम् । स एवास्म्यहम् । आगच्छ । अहमपि विश्वविद्यालयं गन्ता । सममेव गमिष्याव: ।'

अथ तद्वचसि विश्वस्य यावद् द्वारसमीपं गच्छामि तावत् स्वत एवोद्घटते तत् । निस्सरति च तस्मात् क्षौमवेश: पुष्टाङ्गो गौरवर्णोऽवदातोत्तमाङ्ग श्चाकुलाकुलकेश ओमानन्द: । बाहुभ्यां च सस्नेहमाश्लिष्योपरिष्टान्नयते मां रत्नजटितसोपानमार्गेण । अथ प्रशस्ते कक्ष एकस्मिन् लब्धप्रवेशोऽस्मि । उत्तुङ्गस्तम्भाधृतं खल्वस्य क्षत्रम् । स्थूलाकारा: कृष्णवर्णा उत्कीर्णनानाविधाकृतयश्च सन्ति स्तम्भा एते । तदुपर्याधृतं क्षत्रं चास्ति नीलवर्णम् । 'यत्सत्यं क्षत्रमेतदाकाशो वा ?'

'उत्तुङ्गत्वात् तावदेतदाकाश इवालक्ष्यते । परमार्थतस्तु कक्षमेवैतत्, मत्पितामहेन चास्ति निर्मितम् । महान् व्यवसाय्यासीदसौ नगरस्य चैतस्य प्रधानश्रेष्ठी । मन्निमित्तमस्ति भूयसी सम्पत्तिस्तेनार्जिता । कक्षस्यैवैतस्याधस्तादस्ति महान् कोशागारो रजतसुवर्णहीरकप्रभृतिरत्नपूर्ण: । निखिलमपि सुखसंभारमस्ति तेन सञ्चितम् । मत्पितृचरणस्य नास्ति करणीयं प्रापणीयं वा किञ्चित् । तथापि धनराशिरेष मनागपि नापक्षीयते । यथारुचितं पदार्थजातं सद्य एवोपस्थाप्यते भृत्यजनै: ।'

एतस्मिन्नेव क्षणे कश्चिद् भृत्य: समागत्य पृच्छति—'स्वामिन् ! सम्प्राप्तो मध्याह्नभोजनकाल: । सम्प्रति भवते किं रोचते ?'

'नास्ति किञ्चिदीप्सितविशेषम् । यत्किञ्चिदेवानय ।'

भृत्ये प्रस्थिते सत्योमानन्द: पुनरारभते—'मत्पितामहेन तावद् व्यवसायक्रमेण पर्यटता देशदेशान्तरेभ्य: प्रभूतमनोरञ्जनोपकरणानि सन्त्यानीतानि । आगच्छ, दर्शयानि तावत् तानि ।'

इत्युक्त्वोत्थायासौ शनै: कपाटमेकमुद्घाटयति । अथ पश्यामि कक्षान्तरं बृहदाकारं नानाविधिक्रीडनकसमृद्धम् । 'नितरां रुचिराणि खल्वेतानि । अत्र तु कश्चिद्वर्षाण्यतिगमयितुमर्हति ।'

'मित्र ! सत्यमुक्तं त्वया । बाल्यकाले त्वेतैरुपकरणै: सुचिरमक्रीडमहम् । सम्प्रति नास्ति कापि रुचिरेतेषु । पश्य तावदुद्यानमेतत् प्रासादप्राङ्गणविरोपितम् । नास्ति कापि पुष्पजाति: क्वचिद् या त्वनुपलभ्यात्र । देशदेशान्तरपर्यटता मत्पितामहचरणेन यत्र क्वापि काचिदपि रुचिरा पुष्पफलजातिरुप-

लब्धा सा साम्रासमानीयारोपितात्र। शैशवकाले तावत् पादपेष्वेतेष्वारुह्यारुह्य मया क्रीडितमपि खादितमप्यवचितमपि। पादपानामेतेषां पृष्ठदेश एकः सरोवरो विद्यते। आगच्छ, दर्शयानि।'

गत्वा तत्र यावद् दृष्टिविस्तारं करोमि तावत् पश्याम्येकपद एव सहस्रशोऽपि पक्षिणः परिचिताकारा अपरिचिताकारा विचित्रवर्णा जलक्रीडारताश्च। उत्फुल्लसरोरुहाभ्यन्तरतो दृश्यन्ते सचापलमभिचरन्तश्चित्रवर्णा मत्स्याः।

'रमणीयं खल्विदम्। काले काले आगत्य दृश्यजातमेतद् दर्शं दर्शं त्वया सुचिरं मोदमानेन भवितव्यमत्र।'

'सत्यमुक्तं त्वया। शैशवे त्वागत्यात्र भृशं प्रमुदितोऽहमासम्। मातृचरणस्य सन्देशहरस्तु प्रायशो मत्पृष्ठत एवाधावत्, अहं चेतस्ततः पलायमान आसम्। सम्प्रति तु नास्त्येतस्मिन्नपि मे काचिद् रुचिः। यन्मेऽधुना रोचते तत् त्वां दर्शयानि, आगच्छ।'

एवं सौत्सुक्यं निवर्ते कक्षान्तरम्। ओमानन्दः कपाटमुद्घाटयत्येकम्। अथ बृहद्ग्रन्थागारो दृष्टिं मोदयति। 'बधुवर! लक्षमितानि पुस्तकानि सन्ति सन्निहितान्यत्र। मदीयः कालः प्रायशोऽत्रैवातिगच्छति। सर्वेऽप्येते ग्रन्था मया सन्त्यधीताः। परन्तु यत् खलु मयाऽन्विष्यते तत् क्वचिदपि न प्राप्यत एतेषु। अथ पुस्तकस्थं ज्ञानजातं ज्ञानाभास इव प्रतीयते माम्। विज्ञानविषयकान् ग्रन्थान् यदाहमवलोकयामि तदा पश्यामि यदिन्द्रियप्रत्यक्षमेव व्यवस्थाप्य प्रस्तूयते तत्र। एतेन त्विन्द्रियसंविन्मात्रावबुद्धं जगद् व्याचिख्यास्यते। परन्तु त्वमेव तावत् कथय, मित्रवर! अप्यस्ति जगदिन्द्रियमात्रसंवेद्यम्? दर्शनविषयकेषु ग्रन्थेषु च तत्त्वविशेषानुमानपूर्वकं तत्पोषकतर्कान्वेषण एव निखिलां ज्ञानशक्तिं नियोजितां पश्यामि। तर्कस्याप्रतिष्ठानात् तत्प्रसूतं तदुपबृहितं च ज्ञानं कथं तात्त्विकं भवितुमर्हति? कलाविषयका ग्रन्थास्तु प्रथमे कल्पे तत्त्वोन्मुखाः सन्ति परन्तु तत्त्वमुपगम्य ते भ्रान्ता भ्रामकाश्च भवन्ति। मित्र! किं कुर्यामहम्? अधीत्याप्येतान् सर्वान् अनवाप्तलक्ष्यो विषण्णोऽस्मि सम्प्रति। शङ्के, अध्ययनविधिमेव न जानामि सम्यगिति। एतदर्थं जिगमिषुरस्मि काशीनगरीम्। सा नगरी विद्यायाः केन्द्रभूता। गत्वा तत्र गुरूणामुपदेशमनुसरन् लक्ष्यमाप्नुयां कदाचित्। सत्यान्वेषणादृते नास्ति मे क्वचिद्विरामः।'

इत्युक्त्वा ग्रन्थागारान्निष्क्रम्येतस्ततोऽटता तेन कपाटान्तरमनावृतम्। 'किं न्वेतत्? अत्र तु किमपि न दृश्यते ऋते तमस' इति मय्युक्तवति प्रत्यव-

ददोमानन्दः—'सत्यं, नास्त्यत्र किमपि। अन्धं तम एव विराजतेऽत्र। परमागत्यात्र यदाहं निमीलिताक्ष उपविशामि तदैतस्मिन्नेव तमसि दृश्यतेऽलौकिकं ज्योतिरेकम्। किं न्विदं कुतश्चोत्पद्यत इति त्वहं न जानामि। परमेतत्तु जानाम्येव यत् तद्दर्शनान्मनसि तादृशी शान्तिरुपजायते यादृशी तावद् ग्रन्थशतान्यप्यधीत्य नोपलभ्यते।'

'ओमानन्द! न जाने किं चिन्तामग्नोऽसि त्वम्। कियान् साधनसम्पन्नोऽसि! भोजनवस्त्रागारमनोरञ्जनसौविध्यस्य तु त्वयि पराकाष्ठैव दृश्यते। वयं त्वल्पसाधनाः स्मः, तथाप्येतावन्मात्रं मोदमाना निवसामः। यदि भूयस्साधनसम्पन्ना अभविष्याम तर्हि भूयोऽमोदिष्याम। सुखं तु साधनापेक्षं भवति। बुभुक्षितो हि दुःखी भवति। गृहीताकण्ठभोजनोऽसावेव जनः स्वपिति निर्द्वन्द्वो निस्स्पृहो निश्चिन्तश्च। एवमेव साधनाभावो जनमानसं पीडयति। लब्धसाधनस्य च सर्वापि बाधा विलीयते। सुतरां साधनसम्पन्नोऽपि त्वं विषण्णोऽसीति चित्रम्। मन्ये. सुखसाधनानामुपयोगमेव न जानासि त्वम्। आगच्छ, दर्शयामि वां सुखस्य पन्थानम्। सवाहनेन त्वया भवितव्यमेव। एवं चेत्, तर्हि मया सहागच्छ; चलावेतिहासप्रसिद्धमामेरदुर्गम्। मनोविनोदो भविष्यति।'

एवं मय्युक्तवत्येवोपसर्पति बृहदाकारं नवनीतवर्णं यन्त्रचालितं वाहनमेकम्। ओमानन्देन दत्तसङ्केतो यावत् तेनैव सह वाहने प्रविशामि तावत् पश्याम्युपरूढयौवनां बालामेकां विद्युद्यष्टिमिवोत्प्लुत्यागतां वाहनगवाक्षे च मुख प्रवेश्य मधुरेण स्वरेण पृच्छन्तीम्—'ओमानन्द! कुत्र गच्छसी'ति। 'न क्वचिदि'ति तस्मिन्नुक्तवत्यपि सा 'मामपि नये'ति वदन्ती सहसा वाहने प्रविश्य तत्पार्श्वे निषीदति तन्वङ्गी विशालाक्षी जानुपर्यन्तप्रलम्ब्यलका बिम्बाधरोष्ठी स्मितानना पयोधरादपसृतमंशुकं सारयन्ती पिपासिताभ्यां नेत्राभ्याञ्चोमानन्दमेव मुहुर्मुहुरवलोकयन्ती। विश्वविश्रुतनगरदिदृक्षोरपि मम दृष्टिरवशं तस्यामेव पतति युवत्याम्। 'अदृष्टपूर्वसुन्दरी खल्वेषा। अपि काचिन्मानव्येतावती शोभना भवितुमर्हती'ति जायते मन्मनसि तां दर्शं दर्शम्।

वाहने प्रचलति पश्चोन्मुखं धावन्ति प्रासादराजयः पीतवर्णाः सदृशाकाराश्च। चतुष्पथेषु दृश्यन्ते श्वेतपरिधाना राजपुरुषा गमनागमनशीलानि वाहनानि निर्दिशन्तः। कालक्रमेण प्रासादपंक्तिर्विलीयते पादपपंक्तिश्च दृष्टिपथमायाति। राजमार्गस्य दक्षिणेन दृश्यते बृहदाकारः सरोवरः तन्मध्यगतश्च सुमनोहरः प्रासादः। अथ समागच्छन्ति वनानि पर्वतकानि च। सहसा राजमार्ग आरोहोन्मुखः प्रतीयते। 'किमर्थमिदं सर्वं तमसाच्छन्नं भवति? अम्,

दृष्टम्, राजमार्गस्योभयतः पर्वतमाले समागते ।' अथ निम्नाभिमुखो भवति राजमार्गः । वाहनयन्त्रं निष्क्रियत्वं नीयते । आपाततो वामपार्श्वे आलोक्यते सुविस्तीर्णोपत्यकैका । तदुपरिष्टाच्च दृश्यते राजप्रासादः ।

'पुरोवर्त्यस्त्यामेरदुर्ग' इति सहसा वदत्योमानन्दः ।

'मनोहरः खल्वेषः । पश्य तावन्निर्मातुरस्य सौन्दर्याभिस्नेहम् । एतस्मिन् रोमाञ्चके प्राकृतिकवैभवसम्पन्ने पर्वतमालापरिवृते जनसम्मर्दात् सुतरां दूरस्थे मनोरमे स्थले रचितं तेन सौधनिर्माणमेतत् ।'

एवं मय्युक्तवति, ईषन्म्लानवदना ब्रूते बाला—'सत्यमुक्तं भवता । परन्तु पश्यतु भवान् आत्मनो मित्रम् । एतस्मै तु किमपि न रोचते । सौन्दर्यात् त्वेष सविशेषं जुगुप्सते ।'

'स्यान्नामैतदि' त्युक्त्वा यावदोमानन्दाभिमुखो भवामि तावत् पश्यामि तमन्तर्मुखमिव स्थितं मनाक्स्मिताननम् । एतस्मिन्नेव क्षणे सहसा विरमते वाहनं बहिरागच्छामश्च वयं सर्वे ।

रमणीयोऽयं मध्याह्नकालः । दर्शकानां मनांसि नर्तयन्त्य इव निपतन्ति स्निग्धेषु लतापल्लवेषु रविरश्मयः । दुर्गस्य प्रवेशद्वारे तानेवाह्वयति करचालनपूर्वकं महद्गजयूथम् । वैदेशिकास्तावद् गजारोहणाय सविशेषमुत्सुका इव लक्ष्यन्ते । अस्माभिस्तु पादाभ्यामेव गन्तुं निश्चीयते । बाला चोमानन्दमेत्र सभ्रूभङ्गमवलोकयति । परमसौ तु मनागपि तदुन्मुखो न भवति । अन्तर्हितचित्तवृत्तिर्नीचैरवलोकयन्नग्र एव क्रामति सः । अहं चादृष्टपूर्वस्थापत्यदर्शन एवाभिरतोऽस्मि । अचिरेणैव कालेन समायाति मध्ये वर्त्मनि देवमन्दिरमेकम् । जनसम्मर्दाभ्यन्तरतः पश्यामि गर्भगृहे विराजमानां देवीं कृष्णवर्णाम् । 'प्रभावशालिनी खल्वेषे'ति निस्सरति मम मुखात् ।

मुकुलीकृतहस्ताग्रयुगलो जानुभ्यामवनीयात्मानं यावत् प्रणमाम्येनां तावदेकपद एव महान् कोलाहलो जायते । 'किं खल्विदम् ? आम्, दृष्टम्, एष गज इत एवाभिवर्तते । उन्मत्त इवैषः । पलायनमेव वरम् । अहो धिक्, मामेवानुसरत्येषः । किं करवाणि ? कथं नु खलु प्राणरक्षा भवेत् ? आरोहोन्मुखे मार्गे पलायनमपि दुष्करम् । आः, अलं भयेन । गजस्तावदन्यतोमुखोऽभवत् । सुदूरवर्ती सम्प्रत्यसौ । क्व गत ओमानन्दः क्व चास्ति सा बाला ? अन्वेष्टव्यौ तौ । पलायित्वा तावप्यत्रैव क्वचिदागतौ स्याताम् । परन्तु क्व स्तः ? अस्तु तावत् । अलमत्याहित-

चिन्तया। एतस्य नगरस्याभिज्ञौ हि तौ। प्रासादस्त्वासीदस्मद्गन्तव्यः। तत्रैव गच्छेयम्। तत्परिसर एव क्वचित् ताभ्यां सह मेलनं भवेत्।'

एवं निश्चित्य यावत् प्रासादस्य प्राङ्गणे प्रविशामि तावद् बृहती यज्ञशालैका समायाति। अतिक्रम्य तां सोपानमार्गेण चारुह्योपकक्षमेकमागच्छामि। तस्माच्च प्रविशामि कक्षान्तरे। एवं कक्षात् कक्षान्तरं प्रविशन् सुदूरं गच्छामि। इत्थं विचरतो मम होराद्वयमतिगच्छति। अथ दृश्यते सा बाला नितरां व्याकुलमनाः परिश्रान्ता च। 'क्वास्त्योमानन्दः? सर्वत्रैवान्विष्टो मयासौ परं क्वापि न दृष्टः। हताशास्मि सञ्जाता किं करवाणि?' एतदुक्त्वा सा रोदनं प्रारभते।

'बाले! अलं चिन्तयित्वा। अत्रैव क्वचिद् भवितव्यं तेन। अचिरेणैव कालेनान्विष्यामि तम्।'

इति तामाश्वासयता मया तयैव सह पुनरपि तेष्वेव कक्षेषु भ्रम्यते। कक्षात् कक्षान्तरं गम्यते, उपकक्षाच्चोपकक्षान्तरम्। अधस्तनेषु कक्षेष्वन्विष्यते, सोपानमार्गेणारुह्योपरितनेषु च। जनसमूहेषु प्राप्तेषु पादाग्रबलेनोत्थायोत्थायालोक्यते तन्मध्ये। परं क्वापि न दृश्यतेऽसौ। अन्वेषणपरयोरावयोर्यथा यथा कालोऽतिगच्छति तथा तथा बालाया धैर्यमपचीयते।

'अलं शङ्कया। तेनापि क्वचिदस्मदन्वेषणपरेणैव भवितव्यमि'ति मय्युक्तवति सा भूयोऽपि रोदिति—'मदीया शङ्का त्वपरैव। स मां नेच्छति। मां परिवर्जितुमेवासौ क्वचिदपसृतः। पश्यतु भवांस्तावत् तन्निष्ठुरत्वम्। किं करवाणि? न मिलिष्यति चेदसौ तर्ह्यहमपि न गमिष्यामि गृहम्। को नु लाभस्तद्रहितेन जीवितेन?'

इत्युक्त्वोच्चैः सचीत्कारं रोदिति सा। चीत्कारं च तस्याः श्रुत्वा बहवो जनास्तत्समीपमागच्छन्ति पृच्छन्ति च—'किमभवत्, किमभवदि'ति। 'न किमप्यत्याहितम्। गजागमनसम्भ्रमेऽस्मत्सुहृदेको जनसम्मर्दे प्रभ्रष्टः। तदन्वेषणपरावावामितस्ततो भ्रमावः। अनेन क्रमेणापचितधैर्या जातैषा बाले' त्याश्वास्यन्ते ते मया पुनः पुनः।

मन्मुखाच्छ्रुत्वैतत् श्वेतकेशो जन एको ब्रूते—'पुत्रि! अलं विषादेन। अत्रैव क्वचित् स्यात् त्वदीयः सुहृत्। ननु सन्ध्याकालः सम्प्राप्तः। जनाः सम्प्रति निर्गमनोत्सुकाः सन्ति। जनसम्मर्दे विरलतां गते सति मिलिष्यत्येव सः। धैर्यमवधार्य मार्ग एवाधस्तात् क्वचित् प्रतीक्षस्व तम्। निवर्तमानस्तत्र गन्ता सः।'

'सत्यमुक्तं महाभागेनैतेन। आगच्छ, अधस्तादेव चलाव।' एवमुक्त्वा विषण्णया तया सार्धं कक्षात्कक्षान्तरं प्रक्रम्यावरुह्य च सोपानमार्गेण प्रासादस्य बाह्यं प्राङ्गणमागतोऽस्मि। ततश्चलित्वा स्वल्पेनैव कालेनागतोऽस्मि देवीमन्दिरम्। 'एतस्मादेव स्थलात् प्रभ्रष्टा वयमितस्तत' इत्युक्त्वा यावन्मन्दिराभ्यन्तरेऽवलोकयामि तावत् पश्यामि सिद्धासनस्थमृज्वास्थितपृष्ठवंशस्कन्धशिरस्कं देव्युन्मुखध्याननिमग्नमोमानन्दम्।

पुरोवर्तिजन ओमानन्द एवेत्युपजातनिश्चया सा बाला प्रचण्डवातसहकृतविद्युदिव सक्रन्दनमुपसृत्य मुहुर्मुहुराह्वयति तं सुषुप्तमिव। एवमपि स्थाणुवदास्थिते तस्मिन् हताशया तया तत्कण्ठे हस्तपाशमारोप्य कपोलेन कपोलं चावघट्टयन् नामग्राहपूर्वकमाह्वानं प्रारभ्यत 'ओमानन्द, ओमानन्द, ओमानन्द……' इति।

  

साश्चर्यं पश्यतो मे जलदाकृतिरिव दृश्यमेतदस्पष्टतां भजते, 'ओमानन्द, ओमानन्द' इत्याह्वानपदं च 'नारायण, नारायण' इत्येतद्रूपेण परिवर्तते। सोद्वेगं यावदक्षिणी उन्मेलयामि तावत् पश्यामि महात्मानं स्मिताननं 'नारायण! उत्तिष्ठतु, चिरं सुप्तोऽस्ती'ति मुखादुच्चारयन्तम्। 'आश्चर्यं खल्वेतत्! कुत्र नु प्राप्त आसम्? महात्मन्! महतः सङ्कटान्निवारितोऽस्मि भवता। बालायाः शब्दो भवच्छब्दत्वं प्राप्तः, ओमानन्दो नारायणः संवृत्तः, प्रासाद आश्रमीकृतः, रात्र्यारम्भश्च दिवसारम्भत्वेन परिणतः। पश्यतु तावत् स्वप्नस्य भ्रमात्मकत्वम्!'

'मन्ये, भवता कश्चिद् गभीरः स्वप्नो दृष्टः।'

'गभीरः? अतिगभीरः। अतिगभीरस्वप्नाभ्यन्तरत उन्नीतोऽस्मि भवता। एष आश्रमस्तावदामेरप्रासादः संवृतः, भवच्छब्दो बालाशब्दत्वं गतः, अहमोमानन्दोऽभवम्, मदीया स्वप्नावस्था तत्समाधिरूपेण परिणता, उषःकालश्च दिवसावसानत्वं प्राप्तः। विचित्रं खल्विदं स्वप्नचैतन्यम्! अत्र तु दिनं रात्रित्वं भजितुमर्हति, महात्मा कामिनीत्वम्, प्रकाशश्च तिमिरत्वम्। प्रतीयते यच्चैतन्यपरिवृत्तिरेवात्र वस्तुपरिणामहेतुः। अन्यथा कथं नु खल्वेतत् सर्वमेवं परिणमेत्?'

श्रुत्वैतदवदन्महात्मा—'नारायण! प्रसङ्गेऽस्मिन् वस्तुस्थितिस्तावदेतादृश्येव। परं स्वप्नस्तु न भवति सर्वथा भ्रामकः। याथातथ्योन्मीलकोऽपि भवितुमर्हत्येषः।'

'महात्मन् ! अवितथमुक्तं भवता । ओमानन्दस्तावत् सत्यस्वरूप एव । अस्मत्सुहृदासीदसौ विद्योपार्जनकाले । परं तस्य पूर्वतरा स्थितिस्तु मया साक्षात् कदापि नावबुद्धा । तथाप्येतस्मिन् स्वप्ने त्वहं सुकेशं दृष्टवानस्मि तम् । अदृष्ट-पूर्वमपि रूपमेतत् तदीयं सुतरामौचित्यावहं संवृत्तम् । पुनश्च किं कथयानि बालामधिकृत्य ताम् ? ओमानन्दं समाधिगतं दृष्ट्वा नितरां क्लिष्टाभवत् सा । यावन्मात्रं सा तस्मिन्नरमत तावन्मात्रं स तस्या अपासरत् । न जानेऽभवत् किं तस्यास्तदानीम् । प्रबोधनेन खलु विघटितः सुतरां मनोहरोऽवसरः । असमा-हितमौत्सुक्यमुद्वेगं जनयति । अथ भूयोऽपि तत्स्वप्नसूत्रं जिघृक्षामि । परं कथं नु खलु सम्भवेदेतत् ? यथार्थजीवनवृत्तमपि न पुनरावर्तते, का वार्ता पुनः स्वप्निलस्य वृत्तान्तस्य । मृगमरीचिकाकल्पं संवृत्तमिदम् । एष एव स्वप्नो विद्योपार्जनकाले आगतोऽभविष्यच्चेत् तर्ह्यधिकृत्यैनं सद्य एवाप्राक्ष्यमोमानन्दम् । साहचर्यकाले स्वप्न एव नागतः, स्वप्ने आगते सति चासाविव दूरीभूतः । विचित्रेयं विडम्बना ! यद्यसौ मिलिष्यति तर्हि न विस्मरिष्याम्येतत्स्वप्नाधि-कृतां परिपृच्छाम् । परन्तु मिलिष्यत्येवासौ कथम् ? सरित्प्रवाहकल्पं खल्वेत-ज्जीवितम् । असन्निवृत्त्यै हि घटतेऽत्र सर्वम् ।'

'नारायण ! अलमतिविचारणया । को नु खलु जानीयाज्जगद्रहस्यमात्य-न्तिकत्वेन ? गुरुमहाराजानुग्रहेण तु मां किमप्यसम्भाव्यमिव न प्रतीयते ।'

'सत्यम् । परमधिकृत्य यं जनं गतदिनद्वये स्वप्नो दृष्टो मया तस्य तु स्वप्नेऽवतरणमेव विस्मयावहम् । किमर्थमसौ मुहुर्मुहुः मत्स्वप्नेषु समायाती-त्यवबोद्धुमपारयन् यत्सत्यं व्याकुलीभूतोऽस्मि । पञ्चत्रिंशद्वर्षाण्यतिगतानि मया दृष्टस्य तस्य । कदाप्यसौ स्वप्ने नागतः पूर्वतरम् । जाग्रन्नप्यहं कदाचिदेवास्मरं तमेतदभ्यन्तरे । जानात्येव भवान् यद्विद्योपार्जनकाले सहस्रशोऽपि सहाध्यायिनो भवन्ति । कश्चित् कं कं स्मरेत् ? तत्राप्योमानन्दस्तावद् विचित्र एवासीत् । सर्वेभ्यः पृथगेवाचलत् पृथगेवापठत् पृथगेव न्यवसत् । तेन सह सम्भाषितमपि मया कदाचिदेव । अन्यैस्तु तस्मिन्नुपहसितमेव । परमत्रागते सति तदीया स्मृतिः सहसा स्वप्नाकारिता सती पुनःपुनर्बाधते माम् । तदीयैव कथा पूर्वतररात्रावपि स्वप्नायिता, एतस्यां रात्रावपि । कथापि तथ्यानुसारिण्यभविष्यच्चेत् तर्हि नाभविष्यत् काचिद् विप्रतिपत्तिः । अदृष्टपूर्वघटनाचक्रसम्मिश्रणान्महत्कुतूहलं जनयत्येषा ।'

'नारायण ! अलमतिचिन्तया । गुरुमहाराजः सर्वथा समाधानं विधास्यति । तदनुमतिं विनाऽऽश्रमेऽस्मिन् पत्रमपि न दोलायते का कथा पुनर्मानवमनसः ।

नितरां संवेदनशीलं हि तत् । अत्रागतो जनः कोऽपि निष्फलो न निवर्तते । ध्यानावस्थितास्तावत् साक्षादेवानुभवितुमर्हन्ति तत्प्रभावम् । स्वप्नेऽप्यायात्यसौ कदाचित् प्रत्यक्षं कदाचिच्च परोक्षम् । उभयविधापि तत्सन्निधिर्भवति समाधानकारिणी ।'

एवं विमृशतोरावयोर्मध्ये सहसाऽऽगच्छति नरेन्द्रः । 'कुतो भवानि'ति पृष्टोऽसौ ब्रूते—'प्रत्यूष एवोदतिष्ठमहं यदा भवांस्तावत् सुषुप्त एवासीत् । उदीयमानः सूर्यो मयाद्य दर्शनीय इति निश्चित्य गतोऽहमस्मि पुरोवर्तिनं शिलोच्चयशिखरम् । विचित्रवर्णामुषसं दृष्ट्वा तत्र प्रतीतिरजायत यथा नैकवर्णा लक्षशोऽपि गावो घूर्णमाना इतोऽभिवर्तन्त इति ।'

'आश्चर्यावहं खल्वेतत् । उषस एतादृशमेव वर्णनं वेदेष्वपि प्राप्यते । मन्ये, अन्तश्चक्षुरुन्मिषितं तव ।'

'किमेतदिति यत्सत्यं तु न जानामि । परं दृश्यजातेन तेनैतावान् भावितोऽस्मि यथा गत्वा तत्र साक्षात् स्मृतिबलेन च चित्रेऽर्पयितुमिच्छामि तत् सर्वमि'त्युक्त्वा पोट्टलिकाया वर्णकरण्डकमादाय शिखराभिमुखं प्रतस्थे । गच्छंश्च साञ्जलिरब्रवीत्—'क्षमेताम् । ततो निवर्त्य भवद्वार्तां श्रोष्यामि । दृश्य एव तस्मिन्नाबद्धावधानोऽस्मि सम्प्रति ।'

'आश्वस्तो गच्छ । नास्ति कोऽपि विशेषोऽस्मद्वार्तायामि'ति मय्युक्तवति 'मैवं वदतु भवान् । मुखमुद्रयैवाकलितविशेषोऽस्मि । अथ शीघ्रमागन्तास्मी'त्युक्त्वा सत्वरं तिरोहितोऽसौ ।

'महान् कलाकारोऽयम् । पश्यतु भवांस्तन्मनोयोगमि'त्यब्रवीन्महात्मा । नरेन्द्रे गते सति स्वप्नविषयिणी समस्या पुनरपि मदीयं मनोऽधिजग्राह । अवगतमदीयोद्वेगो महात्मा वक्तुं प्रारभत—

'नारायण ! दिवसेषु तेषु गुरुमहाराजदिदृक्षवः शतशोऽपि जनाः समाययुरत्र प्रत्यहम् । समस्या अपि तेषां नानाप्रकारा अभूवन् । केचित्तु व्यावसायिकमपकर्षमपाकारयिष्णव आययुरत्र केचिच्च कुलगतं कष्टम् । केचिदेवाभूवन्नध्यात्मजिज्ञासवः । तेषां कैश्चित् तावत् स्वप्नमप्यधिकृत्य जिज्ञासितं काले काले । अथ सेवारतेन मयापि श्रुतं यथावसरं किञ्चिद् विषयेऽस्मिन् । परन्तु कः स्मर्तुं पारयेत् तत्सर्वम् ? नारायण ! दिनान्यपि बहून्यतिगतानि । तथापि यत्किञ्चिदपि स्मरामि तद्बलेन कथयितुं शक्नोमि यत् स्वप्नस्तावन्न भवत्येकान्ततो निरर्थको निष्प्रयोजनो वा । स्वप्नानां प्रत्येकं किमप्यर्थविशेषं सूचयति । प्रतिपादनविधिः

प्रतिपाद्यं चोभेऽपि वैचित्र्यमये भवतः। भवानेव तावद्विमृशतु वैचित्र्यं स्वप्नायमानस्य जनस्य न जाने क्व क्व विचरतः, किं किं भुञ्जानस्य, किं किं च कुर्वतः। ततोऽपि विचित्रतरमिदं यदसावेव जनः प्रतिबुद्धः सन् नार्हति स्वीकर्तुं स्वप्नगतमनुभवजातम्। तथाहि स्वप्नायमानः खलु जनोऽनुभवितुमर्हति 'मृतोऽस्मि, जना मयि रुदन्ति, किं करवाणी'ति। एतेन सङ्कटभरेणोद्वेलितोऽसावुद्बुध्य प्राप्नोति यदशेषापि स्वप्नगता प्रतीतिरस्ति सर्वथाऽऽधारशून्या। नारायण ! कः खल्वेष यः स्वप्नदशायां म्रियते कश्चासौ यो 'म्रिये' इत्यनुभवति। 'अहं म्रिये' इत्येतस्यानुभवस्य कर्त्ता तु 'नाहं मृतोऽस्मी' त्येतस्माद् विविक्त इव प्रतीयते। परन्तु तत्त्वत उभावप्यन्योन्याभिन्नावेव। भिन्नत्वप्रतीतिर्नास्ति पारमार्थिकी। एकैव चैतन्यशक्तिरवचेतनगता सतीतरेव प्रतीयते। इन्द्रियसन्निकर्षविच्छिन्नत्वादवचेतनगता चैतन्यशक्तिराकारपरिकल्पनाव्यापारे बलवत्तरा भवति। अथ स्वप्नगता प्रकल्पना स्वत एवाकारवत्तां भजते। एवमेव सुहृदा सहाश्रमपद एतस्मिन् भवता स्वापदशायां विचरितं स्यात्।

'नारायण ! विचित्रा खलु मनसो गतिः। अकल्पितपूर्वं द्वैविध्यं जनयत्येषा व्यक्तित्वसंस्थाने। एकस्मिन्नेव स्थले स्थितं जनं स्वप्नदशायां स्थाने स्थाने भ्रामयत्येषा। कालेन साकमप्येवैवमेव लीलायते। अथ स्वप्नदशायां देशकालयोरायामो बृहत्तरो भवति। स्वप्नद्रष्टुस्तत्तद्देशकालगतपरिवेशजन्यानुभवसङ्कुटितत्वान्मूलभूतो द्रष्टा यत्किमपि स्वरूपमवधार्य स्वप्नदशायामात्मानमुपस्थापयितुमर्हति। एतस्यां दशायामेतद्देशवर्तिनी घटना देशान्तरे घटितुमर्हति, एतत्कालावच्छिन्ना च कालान्तरे। एवमेव व्यक्तिविशेषसम्बद्धा घटना जनान्तरसम्बद्धा भवितुमर्हति। अथ जनान्तरमरणव्यापारो भयवशादात्मन्यारोपयितुं शक्यते। सुतरां पूर्वतरदृष्टो जनोऽद्य दृष्टिपथमागन्तुमर्हति, जनान्तरगता बाल्यावस्था जनान्तरसम्बद्धेव प्रत्येतुं शक्यते। प्राचीनमर्वाचीनमिवानुभवितुं शक्यते, अर्वाचीनं च प्राचीनमिव। नारायण ! नितरामसम्बद्ध एष स्वप्नव्यापारः।'

'महात्मन् ! किं मदीय ओमानन्द एतादृश एव संवृतः ? अप्यसावुड्डीयमानानुभवसङ्घातमात्रमस्ति ? किमसावस्तित्वविहीनः सञ्जातः ? नितरां बिभीतोऽस्मि, हताशोऽस्मि, शङ्काग्रस्तोऽस्मि।'

'नारायण ! अलमेवं चिन्तयित्वा। कथयामि भूतार्थम्। धैर्यमवधारयतु भवान्। अन्तरात्मा खलु परमार्थतः सत्यासत्यनिर्णायकः। स्वप्नगतमोमानन्दमधिकृत्य यदि भवानेवं सुदृढं विश्वसिति तर्हि तेन यथार्थेन भवितव्यम्। स्वप्नस्तावद् भावनाविशेषभावितो भवति। सम्बद्धभावनाया परामर्शादिव

निर्धारयितुं शक्यते स्वप्नविशेषो भूतार्थोऽभूतार्थो वा। सम्बद्धभावना हि साक्षिचैतन्यप्रसूतिः। साक्षिचैतन्यं तु स्वरूपेणैवावतिष्ठते स्वप्नदशायामपि जाग्रदवस्थायामपि। विभ्रमस्य कारणं त्वेतद् यद् देशकालादिपरिच्छिन्नमेव चैतन्यं प्रायशः साक्षिचैतन्यं बिडम्बयति। साक्षिचैतन्योद्भावनमेव बिभ्रमापनोदनसाधनम्। एतस्मिंश्चैतन्ये उद्भाविते सति स्वप्नदशायामपि भूतार्थमवाप्तुं शक्यते। स्वप्नदशायां भूतार्थः प्रतिफलत्येव न, इति तु न। साक्षिचैतन्यस्यानुद्भावाज्जनाः स्वप्नप्रतिफलितं भूतार्थं यथावत् स्मर्तुं न प्रभवन्ति।'

'महात्मन्! अपि स्वप्ने भूतार्थो यथावत् प्रत्येतुं शक्यते?'

'नारायण! किं न शक्यते? इन्द्रियाणि तावदात्मशक्तेरपचयकारीणि। यथा हि हैमवतं जलं पयस्विनीषु प्रस्रवति तथैवात्मगतं चैतन्यमिन्द्रियग्रामेषु। स्वप्नदशायां प्रवाहस्य निरुद्धत्वाच्चैतन्यं भृशमुपचीयते। उपचितचैतन्यस्य विनियोगेन भूतार्थः सन्निहितो वा दूरस्थो वा यथावत् प्रत्येतुं शक्यते। नारायण! चिन्तय तावत्, कथं खलु सुदूरस्थापि घटना स्वप्ने यदा कदा यथावत् प्रतिफलति। नैकवारं त्वागामिन्योऽपि घटनाः स्वप्ने वर्तमाना इव दृश्यन्ते।'

'महात्मन्! सत्यमुक्तं भवता। अनेकवारं मयाप्येतादृशः स्वप्नो दृष्टः। शतान्यपि क्रोशानि दूरं घटयमानां घटनां प्रत्यक्षामिव दृष्टवानस्मि स्वप्ने। भाविघटनापि याथातथ्येन दृष्टा मया स्वप्ने नैकवारम्। एवं सति, ओमानन्दस्य वाराणसेयपूर्वतरो जीवनक्रमो यदि मयाद्य स्वप्ने प्रत्यक्षीकृतः तर्हि क आश्चर्यः? परं कथं खल्वेतत् सर्वं सम्भाव्यतां नीतमिति त्ववगन्तुं न पारयामि। प्रक्रियाया अवगतिं विना निखिलोऽप्येष व्यापारः काल्पनिक इव प्रतीयते। अथ कथं नु निर्णयेत स्वप्नप्रतिफलिता का घटना भूतार्था का चाभूतार्थेति। एतन्निर्णयाभावे तु यथार्थमप्ययथार्थमिति प्रतीयात्, अयथार्थं च यथार्थमिति।'

'नारायण! अस्मन्मानससंस्थानं तावदनेकतलीयप्रासादकल्पमिति गुरुमहाराजः प्रायशोऽकथयत्। प्रासादस्त्वेष नैकयुगीनानुभूतिनिचयनिष्पन्न इत्यसावमन्त्रयत। यथा खल्वनेकतलीयः प्रासादः पुत्रपौत्राद्यनेकवंशानुक्रमनिर्मेयो भवति तथैवानेकस्तरीयमध्यात्मसंस्थानमेतदनेकयुगीनानुभवनिर्वर्त्यम्। संस्थानेऽस्मिंस्तावदेकमुपरितनं मनो भवति यत्तु व्यक्तिगतजीवनक्रमागतसचेतनानुभूतिनिचयनिर्वर्तितम्। जाग्रदवस्थायामाचरत्येतत्। एतत् तु प्रत्यक्षानुभवानुगामि। स्वप्नगतचैतन्याचरितव्यापारजातस्य निर्णयभूमिरप्येतत्।

'नारायण ! यथा सूर्यालोकितस्य प्रत्यक्षस्य पृथिवीतलस्याधस्तादनालोकिता अप्रत्यक्षाश्च बहवस्तला अन्तर्हितास्तथैवेन्द्रियग्रामसम्पृक्तस्य मनसोऽधस्तादवचेतना अचेतनाश्च नैके मानसतला विद्यन्ते । अंशतस्तु ते वैयक्तिकानुभूतेर्विस्मृतांशसङ्घटनादुपजायन्ते, अंशतश्च सामष्टिकानुभूतिसम्मिश्रणात् ।

'नारायण ! आश्रममेवैनं तावत् पश्यतु भवान् । उपरिष्टात् त्वयं सर्वप्रत्यक्षोऽस्ति । ये केऽपि समागच्छन्त्यत्र ते सर्वे दृश्यन्त एव । नैके जनाः प्रत्यहमागच्छन्ति निवर्तन्ते च । परमेतत्सर्वं त्वाश्रमस्यास्योपरितनमात्रं स्वरूपम् । अन्तरात्मा त्वस्यान्तर्भुवि विद्यते समाधावेतस्मिन् गुहासु चैतासु । नारायण ! किं किं कथयानि ? प्रत्यहं समागतेषु जनेषु बहवस्तावदितस्ततो परिभ्रमन्तो मन्त्रयमाणाः श्रूयन्ते—'नास्त्यत्र कोऽपि पदार्थविशेषः । एतादृशाः शिखरास्तु हिमवति यत्र क्वापि प्राप्यन्ते । न जाने किमर्थमुषित्वात्र महात्मैष जीवितमपार्थकं करोति ? वर्तते एकः समाधिः । तेनापि किं भूमिस्थेन विगलितमांसावशिष्टास्थिपञ्जरेण ? केचिच्चात्र गह्वराः सन्ति भूमौ निखाताः । किं नाम तैरपि ? ये खलु पशुभिरपि परित्यक्ताः, किं नाम मानुषस्य तैः ? महात्मनानेन क्वचिन्नगरे निवसितव्यं जीवनसुखं चानुभवितव्यम् । एकान्तवासिनानेन निरर्थकमेवात्मा परिताप्यते' इति । अहं तु तेषु हसामि मनसा । पश्यतु तावत् तेषामल्पमतित्वं यदाश्रमनिधेरनभिज्ञा एव ते निवर्तन्ते । यत्सत्यं कश्चिज्ज्ञानवानेव निधिमेनमभिज्ञातुमर्हति । अत्रास्ति गुरुमहाराजस्य समाधिः । ये खलु गुरुमहाराजाभिज्ञा ते त्वागत्यात्र श्रद्धया प्रणमन्ति । ये चानज्ञिास्त आगत्यात्र सकौतुकं दृष्टिं क्षिपन्तीतस्ततः, अप्राप्य च किञ्चिन्मनोऽभिलषितं हताशा अन्योन्यं मन्त्रयन्ति 'किं न्वत्र पादपगुल्मसरिद्व्यतिरिक्तमि' ति । उभावपि नावगच्छतो यदाश्रमस्यास्य साक्षिचैतन्यं तु गुरुमहाराज एव । अशरीरोऽप्यसावत्र सशरीर इवाधितिष्ठति, समाधिस्थोऽप्यशेषमाश्रमपदं व्याप्नोति । तत्साक्षित्व एव प्रवर्तन्तेऽत्रत्याः सर्वा अपि क्रियाः । तं विना त्वहमत्रैकाहमपि जीवितुं न शक्नोमि का वार्ता पुनराजीवननिवासस्य । अशेषोऽप्याश्रमकार्यक्रमस्तेनैव निर्धार्यते । तदनभिज्ञः को नु खल्वाश्रमपदस्यैतस्य रहस्यमवगन्तुमर्हेत् ? रहस्यं त्वेतासु गुहास्वस्ति सन्निहितम् । न जाने कैः कै ऋषिभिः कतिसंख्याकैरादिमानवैः, तत्पूर्वतरं पशुभिश्चात्र निवसितं स्वानुभूतिनिचयश्चात्र विसृष्टः । अस्थिकेशपात्रादिभिः सह तदनुभूत्यवशेषोऽप्यवतिष्ठतेऽत्र ।

'एवमेव, नारायण ! अस्मन्मानससंस्थानमप्याश्रमकल्पमेव । सचेतनोंऽशस्तावदस्य येन केनापि ज्ञेयः । जना जनैर्मिलन्त्यन्योन्यं चावगच्छन्ति । । 'अयं

सज्जनः, अयं दुर्जनः, अयं सदाचारी, अयं दुराचारी, अयं मूर्खः, अयं च पण्डित' इत्यादिशतशोऽपि निर्णयाः प्रकाश्यन्तेऽनुदिनं सचेतनमंशमेनमधिकृत्य । परं सचेतनस्यांशस्याधस्ताद्विद्यते कश्चिदहंकारव्यतिरिक्तः साक्षिभूतश्चैत्यपुरुषो यस्तु चेतनाचेतनं समग्रमपि मानससंस्थानमधिकरोतीति तु लोकानां प्रायशोऽज्ञात-कल्पमेव । ततोऽप्यल्पतरावबोधवन्तो जनाः सन्त्यवचेतनमंशमधिकृत्य । एष तु जनानां कृते गुहाकल्प एव या च गुहास्ति तमोमयी हिंस्रजन्तुनिवासभूता च । परन्तु तस्मिन्नेवावचेतनेंऽशे निहितमस्ति चैतन्यैतिह्यं मानससंस्थानमूलं च । यथा खलु हैमवतगुहानिर्गतैरादिमानवैरशेषापि भारतभूमिर्जनाकीर्णा कृता तथैवा-वचेतनांशनिस्सृतैर्भावबिम्बैर्विचारलवैश्च निखिलोऽपि मानससंस्थानस्य सचेतनों-ऽशोऽस्ति भावितः ।'

'महात्मन् ! रहस्योद्वेलितोऽस्मि भवद्वचः श्रुत्वा । अप्येतत् सत्यम् ?'

'नारायण ! अलं शङ्कया । भवानेव तावद् विमृशतु कियत्संवेदनशीलमिदं मानससंस्थानमिति । कथञ्चिदपि विषयीकृतः कोऽपि पदार्थः सद्य एवात्मसात्-क्रियत एतेन । ग्रहणशक्तिस्त्वेतस्य चक्षोरपि भूयो बलवत्तरा । यत्सत्यं चक्षुस्त्वेतस्य संविद्द्वारमात्रमेकम् । पुनश्चैतत् संस्थानं नास्ति प्रतिव्यक्त्यभिनवारम्भः । शिशोरपि मानससंस्थानं तथैव संवेदनशीलं भवति यथा खलु प्रौढस्य जनस्य । एतावता निश्चीयते यदेतन्न तु जन्मना प्रारभ्यते नैव मृत्युना विलोप्यते । जन्म-जन्मान्तरव्यापिसंवित्पुञ्जभूतं खल्वेतत् । एतस्मिन् मानवशिरस्यस्ति निहितो विश्वमानवानुभवप्रसूतो युगयुगसङ्कलितोऽपरिमितसंस्कारसम्भारः । नारायण ! किं बहुना, भवेन्नाम मनुजेनाशेषोऽपि जलधिरवगाह्यः परं नास्त्यवगाह्यं तथा चेतनेन मनसाऽन्तर्हितं मानससंस्थानम् । एतत् खलु चेतने मनसि क्रियाशीले सति काठिन्यं भजते पाषाणवत्, सुप्ते तु तस्मिन् द्रवीभवति मोमवर्तिकावत् । अतएव स्वप्नस्तावदस्य सुलभः प्रवेशद्वारः । यथा खलु मोमवर्तिकां द्रावयि-त्वाऽग्नेः स्फुलिङ्गः सन्निकृष्टं पदार्थजातं प्रकाशयति, एवमेव संवित्संस्कार-निचयभूतमवचेतनमानससंस्थानमुद्बोध्य शनैः शनैः साक्षिचैतन्यं स्वप्नानुद्भा-वयति । साक्षिचैतन्ययोगादेव ते सर्जनात्मका भवन्ति । केचित् स्वप्नास्तावत् स्मृत्यवशेषभूता एव । ते त्वर्धसुप्ताहंकारप्रेरिता भवन्ति । गभीरतरे मानसतले प्रविष्टे सति चैतन्यस्य केन्द्रबिन्दुरहकारादपसृत्य साक्षिचैतन्यं भजते । तत्सन्नि-धानात् खलु संस्कारावशेषाः सर्जनात्मिकया वृत्त्या व्याप्यन्ते ।'

'महात्मन् ! श्लाघ्यं खलु भवदीयं स्वप्नविषयकं ज्ञानम् । भवति त्वेतत्सर्वं हस्तामलकवत् प्रतीयते । अथोत्सहेऽहं प्रष्टुं विषयेऽस्मिन् किञ्चित् सिद्धान्तितं मनीषिभिः ।'

'नारायण ! नाहं कश्चित् सिद्धान्तज्ञः । यत्सत्यं मया तु पुस्तकानि पठितान्येत्र न । यदेव गुरुमहाराजो वादयति तदेव वदाम्यहम् । पृच्छतु भवान् स्वेच्छया । यदेव गुरुमहाराजो वाञ्छिष्यति तदेव वदिष्यामि ।'

'महात्मन् ! एतत् तु सुष्ठुतरम् । एवं सति, साक्षाद् गुरुमहाराजादेव लप्स्येऽहं समाधानम् । ननु सन्ति केचिन्मनीषिणो ये तु मन्यन्ते स्वप्ननिर्माण-प्रक्रिया नास्ति तावन्मात्रं सर्जनात्मिका यावन्मात्रमस्त्येषा सङ्घर्षात्मिकेति । तेषां मतेन चेतनावचेतनांशौ स्तः सततसङ्घर्षनिरतौ । ये संक्लिष्टसंस्काराः खलु चेतनेन मनसा दम्यन्ते त एव पुञ्जीभूयावचेतनं मनो निर्मान्ति । एवं सङ्घटित-मवचेतनं मनः प्रकृत्यैव चेतनं मनोऽभिभवितुं यतते । एतत् तु दमनविस्मृतान् संस्कारान् चेतनमनसः परिसरे पुनरारोहयितुं व्यवस्यति । दमितसंस्काराणां निर्गमनमार्गश्च विवेकरक्षितो भवति । विवेकप्रहरिणं भ्रामयितुं संस्काराः प्रच्छाद्यात्मानं विभ्रमोपकरणैर्नानाविधैर्निर्जिगमिषन्ति । दमितसंस्काराणामेषा प्रच्छन्नाभिव्यक्तिरेव स्वप्नः । एवं प्रकाशनपूर्वकं दमितवासनोपभोग एव स्वप्नप्रयोजक इति तेषां मतम् ।'

मय्येवमुक्तवति मनाक् शिरःकण्डूयनपूर्वकं महात्मा पुनर्वक्तुमारेभे—'नारायण ! स्युः केचित्स्वप्ना एतद्विधा एव । नास्ति तत्र कश्चिद्विरोधः । एतद्विधा अपि स्वप्नाः प्रकृत्याऽऽविर्भवितुमर्हन्ति । यस्तु दमितो न चोन्मूलितः, कथं खल्वसौ स्वातन्त्र्यं लब्धुं न यतेत, उपभोगाय च न व्यवस्येत् ? पिपासाकुलो भवानेव वारितोऽपि कुतश्चिज्जलमवाप्तुं प्रयतिष्यते न वा ?'

'महात्मन् ! यतिष्ये खल्वहम् ।'

'नारायण ! एवमेव दमिता वासना उपभोगाय यतिष्यन्त एव । परन्त्वशेष-मपि मानससंस्थानं दमितवासनात्मकमेवेति प्रत्येतुं न शक्यते । नारायण ! उपरिष्टाद्विचरन्तो नैके प्राणिनः काले काले सरिज्जल एतस्मिन् निपतन्ति निपातसमकालं च बहिर्गमनाय यथाशक्ति प्रयतन्ते । तेषां केचिन्निर्गच्छन्ति केचिच्च निमज्जन्त्येव । दृष्ट्वैतत् मन्येत चेत् कश्चित् सर्वेऽपि जलस्था जन्तव उपरिष्टादेव निपतिता इति तत्तु हास्यास्पदमेव स्यात् । जले तु मत्स्या अपि सन्ति ये तावज्जलोत्पन्ना एव । एवमेव मानससंस्थानं नाम बाह्यतो गृहीताभिः संवेदनाभिः सहाभ्यन्तरत उपजातानामन्तर्ज्ञानतत्त्वानां संयोगादेव स्वरूपं निर्माति । यथा कश्चित् पशुर्दिवा दूर्वादिकं खादित्वा रात्रौ रोमन्थमभ्यस्यति, एवमेव मानससंस्थानं दिवा चरित्वा नैकविधा अनुभूतीश्चावाप्य रात्रावन्तश्च-र्वणरूपेण स्वप्नान् सृजति । एतस्मिश्चर्वणव्यापारेऽभिनवा अनुभूतयः प्राक्तनाभिः

साकमेकीभूय कामपि नूतनां सृष्टिं निर्वर्तयन्ति। युगयुगान्तरोपजातानुभवनिचयनिष्पन्नत्वान्मानससंस्थानं नाम चर्वणक्रमेण तदानीन्तनैरनुभवैः सह चिरन्तनकालीनं लोलाभूतमनुभूतिद्रवमपि संयोजयितुमर्हति। अथ प्रक्रिययानया स्मरणातीता अपि बह्वीर्घटनाः स्वप्ने निबध्यन्ते। एतद्व्यापारजातं च स्वास्थ्यलाभाय सम्पद्यते न त्वाभ्यन्तरक्लेशाय।'

'महात्मन्! सम्प्रत्यवबुद्धं मया किमर्थमोमानन्देन स्वप्नायितं मय्येतासु निशास्विति। परमेतावन्मात्रेण किम्? अंशविशेषं परिवर्ज्य तत्प्राक्तनचरितं त्वहं जानाम्येव। अज्ञाते च प्राक्तनांशे नास्ति मदीया काचिद्रुचिरपि। अपार्थकमेवैतत्सर्वं व्यवसितं तेन। तां चन्द्रमुखीं बालां च क्लिश्यता तेन यत्सत्यमहमेव क्लिष्टः। पश्यतु भवांस्तावत् तन्नैष्ठुर्यम्। आवां तु तमितस्ततोऽन्विष्यमाणावास्व, असौ च तत्रैव स्थाणुवदतिष्ठत्। कियददाक्षिण्यपूर्वकमुपेक्षिता सैकपद एव तेन निष्ठुरेण! न जाने किमभवत् तस्याः किञ्चोमानन्दस्य।'

'नारायण! अलमत्यावेगेन। स्वप्नमार्गस्तु नास्त्येतावानृजुः। कोंऽशः पूर्वतरोऽस्मिन्, क उत्तरः, कश्च मध्यम इति याथातथ्येन न शक्यते व्यवधारयितुमेकपद एव। नितरां व्यामिश्रित एष व्यापारः। अत्र यथा सूक्ष्मः स्थौल्यं व्रजति, स्थूलश्च सौक्ष्म्यं, समीपस्थो दूरस्थो भवति दूरस्थश्च समीपस्थः, तथैव पूर्ववर्त्यनुवर्ती भवितुमर्हत्यनुवर्ती च पूर्ववर्ती। दिक्कालानुक्रमाः कारणकार्यभावाश्चात्र विपर्यस्ता भवन्ति। नारायण! यत्सत्यमेते सर्वेऽपि क्रमा भावाश्च सन्ति चेतनमनस्सापेक्षाः। मनोनिरपेक्षास्ते सर्वेऽपि विलुप्यन्ते। स्वप्नमार्गेण यथा यथा द्रष्टा मानससंस्थानस्य गभीरतरे तले निमज्जति तथा तथासौ दिक्कालादिप्रतिबन्धनिरपेक्षो भवति। अत्र तावच्छनैः शनैर्न केवलं कालानुक्रमा दूरसमीपबोधाः पौर्वापर्यभावाश्च विलुप्यन्तेऽपितूत्पद्यन्ते तदतीता आद्यबिम्बा ये खल्वेतेषां समेषां सन्ति निर्धारका वैश्वसंविन्निर्वाहकाश्च।'

महात्मन्येवमुक्तवत्येव समापतति नरेन्द्रो हस्ते एकस्मिंश्चित्रफलकमन्यस्मिंश्च वर्णकरण्डकमाददानः।

'नारायण! प्रसन्नवदनोऽसि। सूच्यतेऽनेनोपलब्धिविशेषः।'

'महात्मन्! नास्ति काचिदुपलब्धिः। चित्रमात्रमालिखितमेकम्। संयोगवशान्मोदकारणं संवृत्तमेतन्मम। मया तावत् प्रागपि देवाद्वनस्पतिपर्यन्तं पदार्थजातं विषयीकृत्य बहूनि चित्राण्यालिखितानि परं यादृश आह्लादश्चित्रमेतदालिख्याद्यानुभूतस्तादृशो न तदानीं कदाचिदपि।'

'नारायण ! एवं चेत्, तर्हि दर्शयैतद् यथा लभेवह्यावामपि नेत्रनिर्वाणम् ।'

निशम्याग्रहवचनं महात्मनो नरेन्द्रश्चित्रफलकमुदघाटयत् । तत्र दृष्टिगतं रमण्याकाराया उषसो हस्तलताभ्यां निष्पतन्तं पादपाच्छन्नपर्वतमालाभ्यन्तरस्थगुहायां शनैः शनैः प्रविशन्तं च सूर्यबिम्बम् ।

'किं तस्मात् पर्वतशिखरादेषोषा एतादृशी प्रतीयते सूर्यबिम्बश्च गह्वरे निलीयमानो दृश्यते ?'

एवं मया पृष्टोऽवदन्नरेन्द्रः—'बन्धुवर ! नैवमशेषम् । अंशतस्त्वेवमेव । प्राक् सूर्योदयादुदीयमानामुषसं तदभ्यन्तरत उद्गीर्यमाणं शिखरान्तराले च निलीयमानमुद्वीक्ष्य सूर्यबिम्बं मनसि जातैषोपकल्पना । एषोपकल्पना चित्रफलके तदालेखनं च महन्मोदकारणे संवृत्ते । कुतो जातैषोपकल्पना किं चैतन्मनोहारित्वरहस्यमिति त्वहं न जानामि ।'

'नारायण !' इति वक्तुमारेभे विचारनिमग्नो महात्मा, 'चित्रं त्वेतद् ऋज्वाकारमेव । दृश्यं च यदाधारस्वरूपं गृहीतमत्र तदपि स्पष्टमेव । एतत्तु प्रत्यहमालोक्यत इतरैरपि जनैः । अथास्त्येतत् चिरपरिचितमेव । या काचिदस्ति नूतनता सा तु भावविनिवेश एव । तत्कारणमपि स्पष्टमेव । उदीयमानः सूर्यो ह्युषसा सहकृतो भवति । दृश्य एतस्मिंश्चेदस्ति कश्चिद्विशेषः स तूदयानन्तरं सूर्यस्य सद्य एव गुहाप्रवेशः । गिरिप्रदेश एतस्मिन् भावस्यैतस्य चरितार्थता सूर्यबिम्बस्योदयानन्तरं शिखरपृष्ठदेशगमनात् प्रकृत्यैव निष्पाद्यते । चित्राधारभूतं स्थलं मया सुतरामवलोकितमस्ति । तस्यैव दृश्यस्य गुहारूपेण प्रकल्पनम्, उदितस्य सूर्यबिम्बस्य तस्यां प्रवेशनम्, अथैतस्याः कल्पनायास्तोषावहत्वम्, एतत्त्रयमस्ति यत्सत्यं रहस्यास्पदम् । तत्राप्यानन्दातिरेकजनकत्वात् सूच्यते यदनुप्रवेशितो भाव एतस्मिन्नध्यात्मसर्वस्व इति । स्मरामि तावद् गुरुमहाराजस्यावाभ्यामुपदिशत उदीयमानं सूर्यबिम्बमात्मत्वेन ध्यातव्यमिति । नारायण ! सुचिरं ध्यायता मयाप्यनुभूतं यदेवं ध्यायमानो बिम्बो यत्सत्यमात्मभूत एव भवति । यथा हि सूर्यबिम्ब उदेति नैशान्धकाराभ्यन्तरत एवमेव जायत एष आत्माऽचेतनतत्त्वात् । अथाचेतननिशाभ्यन्तरतो निष्क्रम्यात्मस्वरूपस्य सूर्यस्य गुहाप्रवेशः खलु तस्या गुहाया अवचेतनस्वरूपत्वं सूचयति । अपरिमिततिमिरसङ्घातस्वरूपादचेतनतत्त्वान्निष्क्रान्तः सूर्यात्मा प्रकाशतिमिरमिश्रणभूतादवचेतनान्मनसः कियत्पर्यन्तं न निस्सरिष्यती'त्येतत्तर्कोपजातविश्वासः खल्वत्र तोषकारणम् ।'

महात्मनो मुखाद् व्याख्यामेनां श्रुत्वा नरेन्द्रो ननर्तेव, उवाच च 'महात्मन् ! भवता तु मम हृदयमेव स्पृष्टम् । यत् खलु मन्मनस्यनभिज्ञातकल्पमासीत् तदेव भवतात्र मुखरीकृतम् । धन्योऽस्म्यवाप्य भवद्दर्शनम् ।'

'अलमलमेतावता······' इति यावन्महात्मा नरेन्द्रेण सहालपन्नतिष्ठत् तावन्मन्मनसि जातम्-- यथा खलु सूर्यो रमण्याकारयोषसा वारितोऽपि गगन आरुरोहैव, अपि नामौमानन्दोऽपि तथैव बालायास्तस्या हस्तपाशाद्विमुक्तः स्यात् ।··· किं नु खल्वनर्गलं स्पृहयामि ? असौ तून्मुक्त एवासीत् । अन्यथा कथं खल्वसौ मुण्डितशिरस्को विश्वविद्यालयं समागच्छेत् । परं किमभवत् तस्य ततः परम् ? भवतु, स्मरामि कस्यचिन्मित्रस्य कथयतो यदोमानन्दः कयाचित् साधुमण्डल्या साकं हिमालयोन्मुखं व्रजन् रुडकीनगरपार्श्वे दृष्ट इति । आह, कस्यामनर्गलचिन्तायामस्मि निमग्नः ! क्व हिमवच्छिखराभ्यन्तरनिलीनः सूर्यबिम्बः क्व चावचेतनमनसि प्रविष्ट आत्मा क्व च पुनरज्ञातयोगक्षेम ओमानन्दः ! अलमेतेन दिवास्वप्नेन ।

'नरेन्द्र ! प्रातःकालादेवास्म्यहमत्रैव श्नथितो विचारणायाम् । त्वया त्वालेखनमपि कृतं भ्रमणमपि । सम्प्रत्यहमपि बिश्रमिषामि । चलाव तावत् क्वचित् ।'

'आगच्छतु भवान् । पयस्विन्या अनुतटं विचरिष्यावः ।'

'महात्मन् ! कच्चिद् हिंस्रपशुभयं तु नास्ति तत्रेदानीम् ? रात्रौ तु सिंहव्याघ्रप्रभृतयो वहवोऽपि पशवो विचरेयुस्तत्र ।'

एवं मय्युक्तवत्युवाचासौ—'नारायण ! नाभावो विद्यते सतः । परं दिवा तु ते निलीयन्ते गह्वरेषु पादपपुञ्जेषु च । प्रकाशभीरवो हि ते । यथा चैतन्ये सुप्ति गतवति बहिरागच्छन्त्यवचेतनप्रवृत्तयस्तथैव दिवाकरेऽस्तंगते सति निस्सरन्ति गह्वरादिभ्य एते जन्तवः । नारायण ! निखिलाप्येषोपत्यकाऽवचेतन-मनःकल्पा । विचरतु भवान् स्वेच्छया यत्र क्वापि । गुरुमहाराजस्यानुग्रहान्नास्ति किञ्चिद् भयमत्र ।'

एवं महात्मप्रत्ययाच्छनैः शनैरवरोहणमारब्धमावाभ्याम् । दिनद्वयपूर्वमप्ये-तेनैव मार्गेणारुह्याश्रमपदं गतवन्तावास्व । परं दिने तस्मिन् सूर्यस्यास्तंगतत्वाद-शेषाप्युपत्यकाऽऽसीत्तमोनिमग्नाऽथ च पदे पदे भयावहा । अद्य तु गगनारूढः सविता निम्नतमास्वपि स्थलीषु प्राहिणोत् स्वरश्मीन् । तज्ज्योतिष्यशेषोऽपि प्रदेशो हरीतिमास्नात इवादृश्यत । यथा यथा निम्नाभिमुखमगच्छाव तथा तथा सा

भूयोऽपि रमणीयालक्ष्यत। पयस्विनीप्रवाहस्वनोऽपि शनैः शनैरुत्कर्षं भेजे। आपाततोऽवतीर्णावास्व तत्तटे। सकलकलं प्रवहन्त्यास्तस्या निर्मले जले सत्वरमितस्ततो विचरन्तो मत्स्या महन्मनोहारित्वमवापुः।

'नरेन्द्र ! पश्य तावद् वर्णरुचिरतां चापल्यं चैतेषां मत्स्यानाम्। अनवरतप्रवाहिणी शैत्यसमृद्धा चैषा जलधारा। अतएव कियद्वीतचिन्तका खल्वेतेषां जलजन्तूनाम् ! मत्स्यबन्धकेभ्यो भीतिं नार्हन्त्येते मनागपि। जल एव भोजनं लभन्त एते। वसनस्य त्वावश्यकतैव नास्त्येतेषाम्। कियन्मनोहारीणि जलमयानि वसनानि दत्तान्येतेभ्यः प्रकृतिदेव्या ! गन्तव्यमप्येतेषां नास्ति किमपि। किमर्थं क्वचिद् गच्छेयुरेते ? सङ्घबद्धं ह्येतेषां जीवनम्। सङ्घेऽपि नास्ति कश्चिद्विद्रोह एतेषाम्। सस्नेहसङ्घबद्धत्वान्नास्त्येकाकित्वाशङ्कैतेषां जीवनक्रमे। कियच्चपला एते ! वृहदाकारो मत्स्यः कश्चित् खादितुमपीच्छेच्चेत्, कञ्चित् तर्हि सत्वरं पलायितुमर्हत्यसौ। यदि कश्चिदन्यः पशुर्जले प्रविश्य भक्षितुमिच्छेदेतान् तर्हि गभीरे जले निमज्जितुं शक्नुवन्त्येते। कीदृग्गाङ्गेयस्तावदेतेषां स्नानविधिः ! कियत्पुष्टाङ्गा न्वेते ! नितरां निश्चिन्तैरेतैर्भवितव्यम्। किमर्थं चिन्ताग्रस्ता एव स्युरेते ? काप्यभीप्सा नास्त्येतेषां जीवनक्रमे या स्यादपूर्णा। लब्धसाधनव्यतिरिक्ता नास्त्येतेषां काप्यभीप्सा। दौर्मनस्यमपि नास्त्येतेषु परस्परम्। पश्य तावत् तृणासक्तं खाद्यं कियत्स्नेहपूर्वकं खादन्त्येते सममेव, न च युध्यन्ते कथमपि परस्परम्। किमर्थं युध्येरन्नेव ? सञ्चयस्य नास्त्येतेषु कापि वृत्तिः। सुतरां सुखमयमेतेषां जीवनम्। दुःखिताः स्युरेवैते किमर्थम् ? नास्ति काचिद्वियोगस्याशङ्कैतेषां जीवनविधौ। वियोगो ह्यापतितोऽपि सन् किं करिष्यत्येतेषाम् ? प्रियजनाद्वियुज्याप्येते सत्वरं विस्मरेयुस्तम्। विस्मरणमपि सुतरां दुःखापनोदकं भवति। प्रियजनस्मृतिं चेतनादपसार्यावचेतने मनसि निदधुरेत इत्यपि नाशङ्कनीयमेतेषाम्। अभिशापस्तावदेष मनुजस्यैव भागधेयम्। न जाने केनाभिशप्तोऽसौ प्रागपि पश्यति पश्चादपि, अथ साम्प्रतिकमुपभोक्तुमनर्हो भवति। नरेन्द्र ! आगच्छ, अन्यत्र क्वचिद् गच्छाव। ईर्ष्यामिवोत्पादयन्त्येते मत्स्याः स्वभागधेयेन। यदीन्द्रियपरमेव जीवितमस्ति यापनीयं तर्ह्येतेभ्यो न प्रतीयते कश्चिद् तृप्ततरः। किं नु खलूपलब्धं मनुजेन सर्वविधमप्यूहापोहं प्रयुञ्जानेन ? पठ्यते जीवविज्ञानग्रन्थेषु यत् पृथिव्यामेतस्याममीबापूर्वकजेलीमत्स्यादारब्धो जीवनविकासक्रम इति। को न्वासीदुपयोग एतस्य विकासक्रमस्य ? विकासस्यैनां परां कोटिमवाप्यापि किं तावदुपलब्धं मनुजेन ? अपरिमितसुखसम्भारश्चेत्, तर्हि निरर्थकम्। सुखसम्भारेणैतेन त्वसौ महतीं दुश्चिन्तामेवोत्पादयामासात्मनः कृते। दुश्चिन्ता तूत्पद्यते

तस्योपार्जने, रक्षणे तज्जनितेर्ष्याभावाभिभञ्जने च। एतज्जनितेर्ष्याप्रेरितैरेव जनैर्निर्माषितानि परमाण्वस्त्राणि यैस्तावदशेषापि पृथिवी नैकवारं भस्मसात् कर्तुं शक्यते। पृथिवी तावन्न भवतु भस्मसात् परमशेषा मानवसृष्टिस्तु ध्रुवमेव विलयं गमिष्यति। किं बहुना, यदि सम्प्रत्येवाधिकारिविशेषस्य मनसि भावविशेष उपजायेत तर्हि सममेव क्षयमेष्यन्ति परमाण्वस्त्राणि, तत्प्रयोक्तारः, इतरे जनाः, पशवः, पक्षिणः, प्रासादाः, यन्त्रागाराः, अथ च प्रायशः सर्वमेव। यदि केचिद-वशेषार्हाः, ते तु सन्त्येते मत्स्या महात्मा चासौ। कच्चिदावामपि निवसेवैतेषां सन्निधौ! महतीयं विभीषिका या तावन्मनुजेन स्वयमेवोत्पादिता। विकासस्य परां कोटिमेनामागत्यापि बालिशमिवाचरितं तेन, अथवा ततोऽप्यल्पतरबुद्धिरिव। बालो हि क्रीडनार्थं भवनादिक्रीडनकं सयुक्तिकं निर्माय तैः सह क्रीडति, अथ च नाशयित्वा तत्सर्वं गृहं निवर्तते सानन्दम्। मनुजेनापि सुखार्थं निर्मितानि सन्ति सयुक्तिकं सश्रमं च भवनानि कार्यागाराणि, यन्त्राणि, वाहनादीनि च। एतैः सह विध्वंससाधनान्यपि निर्मितानि सन्ति तेन, परं न केवलमेतेषां सुखसम्भा-राणां प्रत्युतात्मनोऽपि। महती खल्वियं विडम्बना! नरेन्द्र! आगच्छ, आश्रमं निवर्तिष्यावहे।'

इत्युक्त्वा यावन्नरेन्द्राभिमुखो भवामि तावत् पश्यामि तं पोट्टलिकाया निस्सारयन्तं चित्रफलकं वर्णकरण्डकं तूलिकां च। 'किमर्थं प्रसार्यत इदं सर्वम्?'

'भ्रातृवर! क्षन्तव्योऽहम्। चित्रीकर्तुमिच्छामि दृश्यजातमेतत्। नितरां भावोद्बोधकं ह्येतत्। शीघ्रमेव पूरयिष्यामि।'

इति निवेदयन्नेवासौ चित्रफलकमादाय चित्रणं प्रारभत। अन्तराल एतस्मिन्ननन्यगतिकोऽहमितस्ततो निष्प्रयोजनमभ्रमम्। एतावता कालेन भगवान् भास्करोऽप्यस्तोन्मुखोऽभवत्। उपत्यकायाः पृष्ठभागः शनैः शनैः छाययाच्छा-दितोऽभूत्। नीडोन्मुखानां पक्षिणां कलरव उत्कण्ठामजनयन्मनसि। वायुः शीतलतरः संवृत्तः। आश्रमोन्मुखीभूय यावद्दृष्टिमुदक्षिपं तावदपश्यं महात्मानं शिखरपार्श्वे आवामेव प्रतीक्षमाणम्। 'नरेन्द्र! आवामेवेक्षमाणो महात्मोत्सुक-दृष्टिस्तत्र तिष्ठति। त्वरस्वालेखनकर्मणि। आरोहस्तावद् दुष्करः।'

शनैः शनैरावयोराश्रमपदमागते सति सूर्यः सन्ध्यानिगीर्णोऽतिष्ठत् महात्मा च ध्यानमग्नः। बलवदबाधत च मां शयनेच्छा। अथ कटमास्तीर्य कम्बलं च तदुपरि प्रसार्य शयनोपक्रमः कृतः। सरित्प्रवाहोपजनितझर्झरिति ध्वनिरनुक्षणं तीव्रतरत्वं भेजे। तेनैव सहाभिनवीभूता तद्गतमत्स्यानां स्मृतिरपि। कियत्पु-

ष्टाङ्गाः, कियच्चपलाः, कियद्भीतचिन्ताश्चासंस्त इति निद्रयाभिभूयमानेऽपि मनस्युदपद्यत। कालक्रमेण न जाने क्व विलुप्ता मत्स्याः क्व च कूलस्थाः पर्वतमालाः।

  

'भो महात्मन् ! कुत्र गच्छसी'ति पृच्छति राजमार्गपार्श्वस्थो बालकः सकेशं सश्मश्रुं सकूर्चं मध्येवयसि वर्तमानं स्कन्धाहितकन्थं हस्तकमण्डलुं प्रस्वेदक्लिन्नवदनं मन्दं मन्दं चलन्तं साधुमेकम्। 'कुत्र गम्यते बाबा ? वदसि किं न ? बधिरोऽसि ? मूकोऽसि ?' इति पृच्छन्ति सममेव साट्टहासमपरे तत्रस्था बालकाः।

'वत्स !' इति प्रतिवदति मधुरेण स्वरेण सस्मितं महात्मा, 'हरिद्वारयायिनो वयम्। वत्स ! केयं नगरी ?'

'बाबा ! एतदपि न जानासि ? इयं रुडकी अस्ति, भुडकी अस्ति, मुडकी अस्ति, कुडकी अस्ति.........' इति साट्टहासं साङ्गुलिचालनं सदृष्टिक्षेपमुच्चारयन्ति बालकाः।

वृद्धप्रायेषु महात्मसु को नु खल्वेष युवा मुण्डितशिरस्क उन्नतनासिकः त्रिपुण्ड्रालिखितभालो वामस्कन्धावलम्बितयज्ञोपवीतश्चैलपरिहिताधश्शरीरभागो निरुपानद् दक्षिणस्कन्धाहितकन्थः पुष्टाङ्गो गौरवर्ण उद्दीप्तोत्तमाङ्गश्च ? एष त्वोमानन्द इव प्रतीयते। विचित्रः खल्वेषः। पश्य तावदस्य मतिभ्रमम्। साधुरेव संवृत्तः। 'ओमानन्द ! किमिदम् ? साधुः संवृत्तोऽसि ? अप्येतदर्थमेव त्वया त्यक्तो विश्वविद्यालयः ? कुतस्ते भ्रान्तिरियम् ?'

अनुक्त्वैव किमपि प्रचलत्यसौ युवा स्मिताननोऽविचलितगतिश्च। राजमार्गस्य दक्षिणे पार्श्वे केयं दृश्यते प्रशान्तनीरा जलधारा ? अये, एष तूच्चतरगङ्गापरीवाहः। आश्चर्यं खल्वेतत् ! परीवाहस्यैतस्य तटद्वये तिष्ठतो भयावहौ सिंहौ। बिभीतोऽस्मि। न जाने कतमस्मिन्नरण्य आगतोऽस्मि ? आश्चर्यम् ! कथं न्वेते बालकाः पृष्ठदेशे विराजन्त एतयोः ? सम्प्रत्यवगतम्। पाषाणमयौ खल्वेतौ। परं किमर्थमत्र तिष्ठत एतौ ? आम्, अवगतम्। मानवजिघांसाभयात् ससम्भ्रममपसरन्त्या हिमवदरण्यान्या खलु स्वीये वाहने विस्मृतेऽत्र। क्व नु गता साधुमण्डली सा ? क्व च गत ओमानन्दः ? आम्, दृष्टम्। परीवाहानुतटं व्रजन्तः सुदूरे तत्र दृश्यन्ते स्कन्धाहितकन्थास्ते। धावेयम्। परं कियता वेगेन गच्छन्त्येते ! इदानीमपि दूर एव वर्तन्ते। वीतचिन्ताः खल्वेते। का

नामैतेषां स्याच्चिन्ता ? यथालाभसन्तुष्टाः सन्त्येते निष्कामा निस्स्पृहाश्च। कियत्पुष्टाङ्गा न्वेते !

ओमानन्दस्तावत् सर्वेषां पृष्ठत एव चलति प्रशान्तो ध्यानमग्नः स्मितानतनश्च। अहं तु तत्कुशलक्षेमप्रष्टुकामोऽस्मि स चास्त्युदासीनः। प्रतीयते कथनीयं किमपि नास्ति तस्येति। स्यादेव किं यदा साधुरेव संवृत्तोऽसौ ? साधवस्तु स्वाराज्ये विचरन्ति, न किमपि कामयन्ते, न कमपि जिघांसन्ति। सुतरां मधुरं खल्वेतेषां जीवितम्।

अथागतोऽस्मि नगरं किमपि। राजमार्गोऽस्ति जनाकीर्णः। उभयपार्श्वस्था-ट्टालिका हरति मे मनः। 'हर हर महादेव' इत्युद्घोषः श्रूयते समन्तात्। मन्ये पर्वविशेष समागतोऽद्य। वाहनेषु तु 'कुम्भ' इत्यङ्कितं दृश्यते। अप्येष पुण्यः कुम्भावसरः ? कुत्र नु गता साधुमण्डली ? अये, केवलमोमानन्द एव दृश्यते। गच्छेयं तावदेतेनैव सार्धम्। 'ओमानन्द ! कथ एकाक्येव विचरसि ? क्व नु गता सा साधुमण्डली ?' इति मद्वचः श्रुत्वा मन्दं मन्दं चलन्नेवासौ सस्मितं मयि दृष्टिं पातयति, अनुक्त्वैव च किञ्चिद्धस्तेन सङ्केतयति न जाने कुत्र गतेति। 'तया किम् ? मया सहागच्छे'त्यपि निर्दिशत्यसौ तथैव।

अथ महज्जनसम्मर्दे पिपीलिकावन्मदं मन्दं चलावः। 'हर हर महादेव' इति ध्वनिर्गगनमण्डलं व्याप्नोति। विचित्रवेशधारिणो महात्मानो विचर-न्तीतस्ततः। केचित् सन्ति शिरोधराद् गुल्फपर्यन्तमाच्छन्नाः केचिच्च रज्जुमात्र-परिहिताः, केचित् सन्ति कटिपर्यन्तावलम्बिजटासम्भारा केचिच्च सर्वथा मुण्डितकेशाः, केचित् सन्ति गजारूढाः केचिच्च निरुपानहः, केचित् सन्ति परिहितधौतवाससः केचिच्च विभूतिलिप्तसर्वाङ्गाः। लघुकाया विशालकायाः, कृष्णवर्णा गौरवर्णाः, वृद्धा युवानः सर्वविधा एव साधवः सुरसरित्तीरोन्मुखाः सन्ति जनसम्मर्देन साकम्। शीतलो वायुः कृन्ततीवाङ्गानि। अमृतबिन्द्वभिला-षिणो जनास्तथाप्यग्रे प्रसरन्ति सोल्लासम्।

चिरं विलम्ब्यायाति गङ्गातटम्। उदयोन्मुखोऽस्ति सूर्यः। प्राच्यां दिशि लालित्यं वितनोत्युषाः। गङ्गाया उभे अपि कूले स्तो जनाकीर्णे। अमृतपिपासा साकारतां भजतेऽत्र। जीवनसुखनिमग्ना अपि जनाः सकष्टमागता अत्रामृत-बिन्दुलिप्सवः। 'ओमानन्द ! किं त्वमप्यमृतबिन्दुलिप्साप्रेरित एवागतोऽस्यत्र ?'

'मैवं तावत्', सहसा त्यक्तमौनव्रतः किमपि स्खलितपदश्च ब्रूतेऽसौ—'एते सर्वेऽपि जना अमृतं प्राप्स्यन्ति चेत् तर्ह्यहमपि तैरेव सह प्राप्स्यामि। अथ स्नानं

तु करणीयमेवे' त्युक्त्वासौ विसर्जितकन्थो झटिति प्रविशति जले वारत्रयं च निमज्योद्बिन्दूंश्च परिमार्जयन् पुनर्वक्तुं प्रारभतेऽतिशैत्यात् किमपि कटकटायितदन्तः—

'बन्धुवर ! अत्र त्वहं केनचिदन्येनैव प्रयोजनेनागतोऽस्मि । गङ्गाया जले योऽमृतबिन्दुः पतितः तं तु गङ्गैव प्रदास्यत्येतेभ्यः सर्वेभ्योऽपि जनेभ्योऽथ च मह्यमपि । सा ह्यस्ति परमोदारा । या काचिदस्ति गुणवत्तैतस्यां सा तु वितरणायैव प्राणिषु । जनानामुद्धारायैव प्रादुरभूदेषा न तु स्वार्थसिद्धये । अनन्यगतयः षष्टिसहस्रसगरपुत्रा उद्धृता अनयैव । तदनन्तरमपि न जाने कतिकोटिजना भवसागरं तारिता अनया । जनानामुद्धरणममृतबिन्दुवितरणं चास्या भागधेयमेव । हरिद्वारेऽप्यमृतं वितरत्येषा प्रयागेऽपि । परं बिन्दुरेष केनचिदवाप्यते न वेति को निर्धारयितुमर्हति । एष त्वस्ति प्राकृतिको व्यापारः । प्रकृतिश्चास्त्यचेतना । पुरुषस्य चाप्यस्ति किञ्चित् कर्तव्यं नाम । अशक्तोऽसौ पादेन च खञ्ज इत्येतस्मिन् नास्ति मे विश्वासः । असौ त्वस्ति सहस्रशीर्षा सहस्राक्षः सहस्रपाच्च । अथ किं स्विन्नास्ति तस्य ज्ञातव्यं द्रष्टव्यं गन्तव्यं वा ? बन्धुवर ! मयि विश्वविद्यालयान्निर्गते सति जायेन्नाम भवादृशां मनसि यद्वस्म्यहं संसाराद् भीतः पलायितो मोक्षलिप्सुः स्वार्थपरो भ्रान्तो वा । नास्म्यहमेतादृशः कथञ्चित् । यत्सत्यं यदाप्रभृत्येवैता वैश्वानरीया ऋचो मयाऽधीताः—

स इत्तन्तुं स वि जानात्योतुं स वक्त्वान्यृतुथा वदाति ।
य ईं चिकेतदमृतस्य गोपा अवश्चरन्परो अन्येन पश्यन् ॥
अयं होता प्रथमः पश्यतेममिदं ज्योतिरमृतं मर्त्येषु ।
अयं स जज्ञे ध्रुव आ निषत्तोऽमर्त्यस्तन्वा वर्धमानः ॥
ध्रुवं ज्योतिर्निहितं दृशये कं मनो जविष्ठं पतयत्स्वन्तः ।
विश्वे देवाः समनसः सकेता एकं क्रतुमभि वि यन्ति साधु ॥

तदाप्रभृत्येव कृतसङ्कल्पोऽस्म्येतन्मर्त्यशरीराभ्यन्तरनिहितस्यामृतोत्सस्यानुसन्धानाय । जानाम्यहं सुतरां यदुत्सोऽस्त्येष चेतनावचेतनाधिचेतनस्वरूपाभिरध्यात्मपरिधिभिः परिवृतः । अथ तदनुसन्धानमस्ति नितरां दुरूहम् । परन्तु यदि भगीरथो गङ्गामेनां शिलोच्चयाभ्यन्तरतोऽवतारयितुं शशाक तर्हि कश्चिदन्यो जनो मानसगङ्गामप्यध्यात्माभ्यन्तरतो निष्पादयितुमर्हेन्नाम। परं सम्भावनैषा याथार्थ्यपदमारोढुमपेक्षते भगीरथप्रयासम् । तदर्थं तु बन्धुवर ! अस्म्यहं सर्वथा सन्नद्धः । अपेक्षा तु वर्तते सम्प्रति मार्गदर्शकस्य । मित्र ! एतदर्थमेवागतोऽस्म्यहमत्र । हिमवत्क्षेत्रे-

ऽस्मिन् निवसन्ति महान्तो योगिन इति श्रुतं मया सुचिरकालात् । तेषां केचिदत्राप्यागता भवेयुः ।'

'ओमानन्द ! एतत्तु सुकरम् । अपि त्वं न पश्यसीतस्ततो भ्रमतो विचित्रवेशधारिणो महद्योगिनः ? तेषामेव कश्चित्त्वया प्रार्थनीयः ।'

'मित्र ! साधवस्तु सन्त्यत्र सहस्रशोऽपि । परं दिवसेष्वेतेष्वसाधुरपि साधुवेशधरो भवति, आत्मनः साधुतरत्वं च प्रत्याययितुमर्हति । अथ वेशमात्रं नास्ति परिचयसाधनम् । अहं तावदन्यथैव साध्वसाधुविवेकं कर्तुमस्मि क्षमः ।'

एवमाश्वासितोऽहं तेनैव सह विचरामीतस्ततः कश्चित् सत्साधुर्मिलेदिति विचिन्तयन् । 'मण्डलीषु तु नैव गन्तव्यमि'ति सहसा ब्रूते ओमानन्दः । 'किं ने'ति पृष्टो मया प्रतिवदत्यसौ—'मण्डलीमध्यगतास्तु सत्साधवो भवितुमेव नार्हन्ति । सत्साधोर्हि नास्ति कश्चित् प्रयोजनो मण्डल्या । असौ त्वेकाक्येव भवति ।'

एवं विचरद्भ्यामावाभ्यां दृश्यत एको योगी योऽष्टादशवर्षेभ्य एकपादेव तिष्ठतीति श्रूयते । बृहज्जनसम्मर्दस्तत्समन्तादाश्चर्यचकितस्तिष्ठति । 'ओमानन्द ! साधुरेष महानिव प्रतीयते । अष्टादशवर्षेभ्य एकपादेव तिष्ठत्येषः । को न्वपरः शक्नुयादात्मानमेवं साधयितुम् ? एष एव तावत् प्रार्थनीयः ।'

'मैवं विचार्य । नैष साधुः । एष त्वासनसिद्धः । अभ्यस्तैकपादासन एषः । अन्यत्र गन्तव्यम् ।'

अथ भ्रमद्भ्यामावाभ्यां दृश्यत एकः शीर्षासनस्थो योगी प्रलम्बकेशः काषायवस्त्रः कृशकायश्च । परिवार्य तमपि तिष्ठन्ति सहस्राधिकजनाः । नैकवर्षेभ्यस्तिष्ठत्येष शीर्षासनस्थ इति श्रूयते जनानां मुखात् । 'ओमानन्द ! एनमेव पृच्छ यत्किञ्चिदसि प्रष्टुकामः ।'

'बन्धुवर ! अलमेतेन व्यामिश्रणेन । क्व खलु ज्ञानवत्त्वं क्व च शारीराभ्यासमात्रपरत्वम् । शारीराभ्यासमात्रेण नार्हति कश्चिद् ज्ञानी भवितुम् । आगच्छ, अन्यत्र गच्छाव ।'

जनसम्मर्दमध्य एव चलद्भ्यामावाभ्यां किञ्चित्कालानन्तरं दृश्यत एको बृहज्जनसमूहः प्रलम्बकेशकूर्चेन पिनद्धसर्वाङ्गश्वेतवाससा पद्मासनस्थेन प्रसन्नवदनेन मध्ये वयस्यवस्थितेन शनैश्शनैश्चालितहस्तयुगलेन महात्मना ध्यानविधिरुपदिश्यमानः । बृहन्मेलकजनितसंघोषमध्यवर्तिनोऽप्येते जना दत्तचित्ता इव लक्ष्यन्ते तद्वचसि ।

'ओमानन्द ! सिद्ध इव लक्ष्यत एषः। पश्य तावत् कियानाकर्षकोऽय-माकृत्या। शिष्याश्चास्य सन्ति प्रलम्बकेशा अपि, श्वेतकेशकूर्चा अपि, रज्जुमात्रावेष्टितकाया अपि। अवलोकय तावदेतेषां सर्वेषां तैलधारावद् ध्यानपरत्वम्। महात्मनः प्रभावादेते सर्वे योगसिद्धाः सञ्जाताः। अथैतस्यैव सकाशं गन्तव्यमावाभ्याम्। त्वदीया समस्या त्वत्रैव समाहिता स्यात्।'

'मित्र ! अलं भ्रान्त्या। नेयं समाधेयात्र। जनोऽयं योगशास्त्रदीक्षा-गुरुः। 'योगश्चित्तवृत्तिनिरोध' इत्येतद्योगसूत्राध्येतायं जनसमूहमेनं वाग्विलासेन मोहयति। यत्सत्यमेष तावच्छास्त्राभ्यासी न चात्मविद्। योगारम्भ एवोपयो-गितास्य, न तदनन्तरम्। मम योगारम्भस्तु शैशव एव निवृत्तः। तदा प्रभृ-त्येवाधिगतं मया जीवितस्यार्थवत्ता योग एवेति। यादृशं ध्यानमेष उपदिशति तादृशं तु मया शैशव एवाभ्यस्तम्। सम्प्रत्यहं साक्षादध्यात्मप्रविविक्षुरस्मि, अथ च तद्रहस्याविष्करिष्णुः। एतस्मादेवाध्यात्मसंस्थानादादाय शक्तिं महा-मानवो भवितुमर्हति कश्चित्। का नाम साऽध्यात्मनाभिः यत्प्रतिष्ठितः ऋषि-स्तत्रैव निखिलं देवसङ्घं पश्यति तत्रैव चात्मनः सर्वात्मकत्वम्? एतस्या एव नाभेरन्वेषणार्थं सङ्कल्पितमस्ति मयाऽऽत्मजीवितम्। एतदर्थमेवाहं जीवामि, एतदर्थमेव मरिष्येऽहम्। यथा खलु विज्ञानविदो भौतिकपदार्थानां रहस्योद्घा-टनकर्मणि सन्ति निरताः, तथैवाहमस्मि निरतोऽध्यात्मगवेषणायाम्। अनयैव जिज्ञासयास्म्यहमाकृष्ट एतावत्पर्यन्तम्। अत्रत्यैरेव महर्षिभिरस्त्येषाऽध्यात्म-संस्कृतिरभिवर्धिता। नगाधिराजसन्निभः प्रज्ञाप्रासादः क्व नु खलु लभ्यो यदधि-ष्ठितः कश्चित् तत्त्वान्वेषणकर्मण्यात्मानं सर्वभावेन नियोजयेत्। अत एव कामयेऽहमेतस्यैव शरणागतिम्। अपेक्षा त्वस्ति मार्गप्रदर्शकस्य। मार्गानभिज्ञोऽहं भ्रमाम्यन्धे तमसि. एवमपि कथञ्चिन्मिलेदसाविति मनसि सङ्कल्प्य। अस्ति चेद् ज्ञेयं नाम किञ्चित्, तर्हि तदुपायभूतो मार्गोऽपि स्यात् कश्चित्। आद्यर्षि-भिस्तावन्मार्गोऽन्विष्ट एव स्यात्। अन्विष्टस्य पुनरन्वेषणं तु निरर्थकमेव। पारंगतोपदिष्टमार्गेण ज्ञानावाप्तिः खलु सुकरा। सौकर्योपार्जितमेतद्विधं ज्ञानं तावत् सामर्थ्यविशेषेण वर्धयितुमपि शक्यते। परं क्व नु खलु प्राप्तव्य एतादृशो गुरुः?'

इत्येवमोमानन्द उक्तवत्येव नितरां माधुर्योपेतः शब्दः श्रूयते पृष्ठदेशात्— 'अलं विषादेन। ओ३म् शान्तिरि'ति। यावत् परिवृत्यावलोकयामि तावत् पश्याम्यदृष्टपूर्वाभाविच्छुरितमुखमण्डलं प्रलम्बकेशश्मश्रुकूर्चं प्रतप्तहेमवर्णम् ऊर्ध्ववयसि वर्तमानं दुकूलावृतशरीरार्धम् आहिताग्निं सिद्धासनस्थं मन्दस्मितपु-

लकितानन शाम्भवीमुद्रास्थापितलोचनयुगलं महात्मानमेकम् । दर्शनसममेव निस्सरति मन्मुखात्– 'भगवन् ! वन्दे ।' ओमानन्दश्च साष्टाङ्गं प्रणमति ।

'वत्स ! किमर्थं चिरायितोऽसि । त्वामेव प्रतीक्षमाणोऽत्राहं स्थितोऽस्मि । यत्सत्यं त्वन्निमित्तमेवाहमागतोऽस्म्यत्र । हिमवति निवासाय कृतसङ्कल्पोऽसि चेत् तर्ह्यनुसर मामि' त्योमानन्दमुद्दिश्योक्त्वाऽसङ्ग इवोत्तिष्ठति चलितुं चोपक्रामति महात्मासौ । ओमानन्दश्च मन्त्रमुग्ध इव तदनुपदमेव चलति । अनन्यगतिकोऽहमपि तमेवानुसरामि । मन्दाकिन्या: कूलान्तरे गते सति प्रारभते पर्वतारोह: । किमप्यध्वानमतिक्रम्य दृश्यते गुहाया द्वारमेकम् । अतीव सङ्कीर्णं च तत् । महात्मा त्वनायासमेव प्रविशति तस्मिन् । ओमानन्दोऽपीषदायासपूर्वकमनुसरति तम् । मदीय: प्रवेशस्तु दुस्साध्यो भवति । अभ्यन्तरं गत्वा कथञ्चिद् गहनतिमिराच्छन्नं पश्यामि सर्वम् । पन्था अपि न दृष्टिगोचर: । न चोभयोस्तयो: पादस्फालनध्वनिरेव श्रुतिगम्य: । न जाने कियता वेगेनोभावपि दृष्टिगोचरतामतिक्रान्तौ ? असहायोऽहं बिभीतोऽस्मि । गुहाभ्यन्तरालो भयास्पदत्वं भजते । तिमिराभ्यन्तरत एव दृश्यन्ते सहसा स्फुलिङ्गायमानानीतस्ततश्च दोलायमानान्यस्थीनि कानिचित् । मम पश्यत एव पश्वाकारतां भजन्ते तानि । सिंहा व्याघ्रा वृका वराहा: पन्नगा अनभिज्ञातस्वरूपाश्चान्ये भूयांस: पशवो दृश्यन्ते इतस्ततो विचरन्त: । आक्रामेयुश्चेन्मयि, तर्हि किं करिष्यामि ? ओमानन्दोऽपि न दृश्यते । न जाने महात्मासौ कुत्रानयत तम् । मायावीव लक्ष्यते स: । एतादृशं भयं चेदत्रैव समुपस्थितं तर्ह्यत: परं किं भविता ? अये, एष नु व्याघ्र इत एवाभिवर्तते व्यात्तानन: पृष्ठदेशारोपितलाङ्गूलश्च । उत्थापितशुण्डोऽसौ गज इतोमुखो धावति । अये, कुतो नु खलु पन्नगोऽयमागत: ? किं कुर्याम् ? क्व गच्छेयम् ? विभीषिकैव दृश्यते सर्वत्र । मरणं तु सम्प्रति निश्चितप्रायमेव । प्राणरक्षोपायश्चेत् कश्चिदत्र स तूत्प्लुतिरेव ।'

इति निश्चित्य यावदुत्प्लवितुं चेष्टे तावद् भूमिनिपाताहतपादोऽक्षिणी उन्मीलयामि । 'अये, स्वप्न एवासीदेष: । दिष्ट्या धारयामि जीवितम् । पुनरुज्जीवित इवास्मि । पश्य तावत्, सुखसुप्तोऽस्म्येतस्मिन्नाश्रमपदे तथापि भयावहे गह्वरेऽस्मि पातित: स्वप्नेन । कियदन्तरालव्यवहिते स्वप्नजाग्रतचैतन्ये ! परं क्व नु खलु गत ओमानन्द: ? असंशयं मोहितोऽसौ महात्मना तेन । परन्तु स्वप्ने एव संवृत्तमेतन् न च यथार्थत: । स्वप्नोऽप्याश्चर्यमय आसीत् । यदाप्रभृत्याश्रमे एतस्मिन्नागतोऽस्मि तदाप्रभृत्येवासौ मुहुर्मुहु: स्वप्ने समागच्छति कदाचिदेकं रूपमाधाय कदाचिच्च रूपान्तरम् । न जाने किं चिकीर्षत्यसौ । परं स एव

वराकः किं करोतु ? स्वप्नस्त्वस्ति मदीयः। ममैव संस्काराः स्वप्नचैतन्ये नानारूपमाधाय प्रतिफलन्ति। परन्त्वोमानन्दविषयका एव संस्काराः किमर्थमाविर्भवन्त्यत्र ? अस्तु तावत्, प्रातरुत्थाय महात्मानमेव प्रक्ष्यामि। कियदवशिष्टं रजन्या इत्येतदपि ज्ञातुं न पारयामि। एषा सरिच्चानवरतं न जाने किं मन्त्रयति। रात्रावपि न स्वपित्येषा। परमेनामेव किमर्थमुपालभे ? अहमेव कदा स्वपिमि ? स्वापच्छलेन केवलं स्वप्नाकुलोऽस्म्यनवरतम्। कदाचिदेषा सरिदपि स्वप्नायेन्नाम ! परं कस्य हेतोः ? कस्यचिदासन्नमित्रस्य ? किं नु खल्वासन्नमित्रं स्यादेतस्या ऋते मन्दाकिन्याः ? तां त्वेषाऽचिरेणैव कालेन प्राप्स्यति। आसन्नप्राप्तिः कदाचित् स्वप्नरूपेणाभासेत। कच्चिन्मदीयमपि भागधेयमेतादृशं स्यात् !

'अलमेतेन विमर्शेन। शयनमेवाश्रयणीयम्। परन्तु शयनमपि नास्ति मम भागधेयमत्र। यदैव निद्रायितोऽस्मि तदैव समापतत्योमानन्दः। यदा तून्मीलितचक्षुरस्मि तदा क्वापि न दृश्यतेऽसौ। निद्रया नेत्रे निमीलिते सति च सर्वत्र स एव दृश्यते। आश्रमे एतस्मिन्नेषैव वस्तुस्थितिः। किमर्थं तत् ? प्रक्ष्यामि तावन्महात्मानम्। दिष्टचा प्रभातप्राया शर्वरी। तमसोऽभ्यन्तरत आविर्भवति दिवसीया च्छाया। श्रुतिपथमागतः खगानां कलरवः। पश्य तावन्नरेन्द्रम् ! वीतचिन्तोऽसौ सम्प्रत्यपि सनासिक्यस्वनः स्वपिति।'

अथोत्थायानुष्ठितनित्यक्रियाकलापोऽहं यदा पर्णशालामुपावर्ते तदा पश्यामि ध्यानोत्थितं महात्मानं गुहाया बहिर्निर्गत्य सुप्तोत्थितेन नरेन्द्रेण साकं साट्टहासं वार्तालापानुरक्तम्।

  

'नारायण ! कथमतिगता रजनी ? मन्ये, सुखसुप्तोऽसि।'

'महात्मन् ! अशेषापि रात्रिः कथमतिगतेत्यवबुद्धमपि न मया। गभीरनिद्राभ्यन्तर्गतत्वात् 'कोऽहम्, कुत्रास्मी'ति किमपि मया न ज्ञातम्। भवदाह्वानं श्रुत्वैव प्रतिबुद्धोऽस्मि। एतादृशं शयनसुखं लोके नैवोपलभ्यम्। तत्र तूद्वेजकौष्ण्यव्यतिरिक्तं मशकचौरशत्र्वादिजन्यं भयजातं सुखसुप्तमपि जनमशेषेण न त्यजति। एतादृशी निश्चिन्तनिद्रा तत्र क्व सुलभा ? पयस्विन्या झर्झरिति ध्वनिस्तावच्छिशुस्वापनाभिरताया मातुः स्निग्धस्वरसंयोग इव श्रूयते। भगवन् ! भवत्सकाशमागत्याहमानन्दाप्लावितोऽस्मि, कृतकृत्योऽस्मि। परं चिन्ता तु खादतीव मामद्यैवास्ति प्रस्थातव्यमि'ति।

'नारायण ! किमर्थमेषा चिन्ता ? एषा तु तपोभूमिः । युवयोर्मनोऽभिरमते चेत् तर्हि केचिदन्येऽपि दिवसा अतिगमिताः स्युरत्र ।'

'महात्मन् ! रुचिस्त्वेतद्विधैव । परन्तु किं करवाव ? गर्दभाविव भराक्रान्तौ स्वः । दुर्वहः खलु गार्हस्थ्यभरः । तत्र मनुजः पशवायते, पारतन्त्र्यं नीयते, स्वत्वविसर्जनाय विवशीक्रियते ।'

'नारायण ! अलमेतच्चिन्तयित्वा । गार्हस्थ्यं नाम सर्वाश्रमाश्रयभूतम् । भराक्रान्तिस्तु तत्र स्वाभाविक्येव । परन्तु को नामायं भरः ? गभीरजलाभ्यन्तर्गतो मत्स्यस्तावद् भराक्रान्तोऽपि सन् किं कथमपि तथा मन्यते ?'

'भगवन् ! नासौ तथा मन्येत ।'

'नारायण ! अस्माभिरपि तथैव भवितव्यम् ।'

'भगवन् ! अस्मन्मननशीलत्वमत्र कारणम् । वयं तु भूतमपि पश्यामो भाविनमपि । भूते दुःखान्विते सति विषीदामः, भाविनि च शङ्काकुले सति शङ्काग्रस्ता भवामः ।'

'नारायण ! एतेन विषादेन शङ्कया वा प्राप्यते किमपि ?'

'भगवन् ! किं नाम प्राप्नुयात् ? आम्, दृष्टम् । प्राप्यते तावत् । प्राप्यते विषादः, प्राप्यते शङ्का ।'

'नारायण ! को लाभस्तावदेताभ्याम् ?'

'भगवन् ! लाभस्तु कोऽपि नास्ति । परन्तु किं कुर्याम ? अस्मदीया तु वृत्तिरेवैतादृशी ।'

सावसादं नरेन्द्रे विरते सति मयोक्तम्—'महात्मन् ! अवितथमुक्तमनेन । वृत्तिस्त्वस्मदीयैतादृश्येव । तस्याञ्च नः को वशः ? जागरणकालेऽनवाप्तप्रकाशनावसरा वृत्तयः स्वापकालेऽभिवर्धितवेगाः परिवर्तितस्वरूपा मायाच्छन्ना भ्रामकाश्च भूत्वा प्रकाशमायान्ति । पश्यतु तावन्मदीयां विडम्बनाम् । यदाप्रभृति पुण्याश्रमपदमेनमागतोऽस्मि तदा प्रभृत्येवोमानन्दविषयकः स्वप्नोऽतितरं बाधते मां प्रत्यहम् । न जाने किं भविता ? पूर्वं तु स कदापि नायातः । परमत्र तु कापि रात्रिर्नातिगता यस्यामसौ स्वप्ने न दृष्टः । न जाने एतेनाश्रमपदेन तस्य किम् ?'

'नारायण ! अद्य भवता स्वप्ने किं दृष्टम् ?'

'महात्मन् ! किं कथयानि ? स्वप्नजन्यो रोमाञ्चः खलु सम्प्रत्यपि न मुञ्चति माम् । असावेवौमानन्दः कयाचित् साधुमण्डल्या सह हरिद्वारोन्मुखो दृष्टोऽद्य । कुतूहलवशादहमपि तदनुयात्रिकः संवृत्तः । तन्मनसि सङ्कल्प उदजायत कुम्भपर्वणि सद्गुरुरन्वेषणीय इति । तत्साहाय्यार्थं तेनैव सहाहमप्य-भ्रमम् । सद्गुरुविषयकेषु सर्वेष्वपि मत्प्रस्तावेषु तिरस्कृतेषु पृष्ठदेशात् स्वयमेवा-ह्वयांचकारावामेक आहिताग्निरुद्दीप्तभालो हिरण्यवर्णो जटाजूटधर उद्धर्वे वयसि वर्तमानः स्मिताननः प्रफुल्लारविन्दनेत्रो मधुरवाक् ...... '

'नारायण ! अलमेतावते'ति सहसा वक्तुमारेभे महात्मा, 'कथयतु तावद् भवान् परिधानं तु तस्य कीदृशमासीत् ।'

'महात्मन् ! किं ब्रवाणि विषय एतस्मिन् ? यथाहं स्मरामि, स्कन्धदेशा-ज्जानुपर्यन्तावरकपरिहित आसीदसौ । पीतवर्णं प्रभूतविवरमयं चालक्ष्यत तदावरकम् । यत्सत्यं स्थूलाः स्थूलास्तन्तव एवादृश्यन्त तच्छरीरे । क्व चारविन्दसुभगं तच्छरीरं क्व च रुक्षतन्तुमयं तत्परिधानम् ! न जाने कथमसह-तासौ हिमाच्छादितशिखरेभ्यो विसृष्टान् वातेषून् । विचित्रा खलु महात्मनाम-भिरुचिः !'

'नारायण ! किं रुक्षतन्तुमयपरिधान आसीदसौ महात्मा ? अशेषमेवै-तादृशः ? किमपि नान्यविधः ?'

'महात्मन् ! अथ किम् । सर्वथा तद्विध एव ।'

'नारायण ! एवं चेत्, तर्ह्यसंशयं तेनास्मद्गुरुमहाराजेनैव भवितव्यम् । उच्यतां तर्हि किमभवत् ततः परम् ।'

'महात्मन् ! किं कथयानि ? अत्यहितं संवृत्तं तदनन्तरम् । ओमानन्द-द्वितीयो हिमवदभिमुखं प्राचलदसौ । अहमप्यनुपदमेव तमचलम् । मन्दाकिनीमति-क्रम्य हिमवच्छिखरमेकमागता वयम् । तत्र शिखरपादे दृष्टमेकं गुहामुखम् । महात्मा तु झटित्येव प्रविष्टस्तस्मिन्, ओमानन्दश्चेषदायासपूर्वकम् । अहं तु सकष्टमेव तथा कर्तुं क्षमोऽभूवम् । प्रवेशानन्तरमपि गहनतिमिरव्यतिरिक्तं किञ्चिदपि न दृष्टिपथमायातम् । तौ कुत्र गतावित्यपि न लक्षितम् । नितराम-सहायोऽहं संवृत्तः । ततोऽपि दुःखतरं तावदेतद् यद् दृष्टौ कथञ्चित् स्थैर्यमापद्य-मानायामवलोकिता मया केचित् स्फुलिंगा इतस्तत उड्डीयमाना अथ चास्थि-रूपेण परिणीयमानाः, अन्ततोगत्वा च पश्वाकारं भजमानाः । तैराक्रान्त आत्मरक्षणार्थमुज्जिगमिषुः स्वापोत्थितोऽस्मि सहसा । सम्प्रत्यपि कम्पन्ते ममा-ङ्गानि रोमाञ्चश्च सञ्जायते । महात्मन् ! किं नु खल्वेतत् ?'

'नारायण ! अलं भयेन। ननु कथयतु भवान् कीदृश ओमानन्द इति।'

'महात्मन् ! एवं प्राप्ते सति किं तत्स्वरूपपरामर्शेन। संक्षेपेणासौ तु हिरण्यवर्णोऽतितिबृहदाकारश्चिक्कणशिरस्को गोशफाकारशिख उन्नमितगुल्फश्च।'

'नारायण ! ज्ञातं मया कोऽसाविति। अलं चिन्तया। मया तावज्ज्ञातम्।'

'महात्मन् ! कथं नु भवता ज्ञातं स्यात् ?'

'नारायण ! अलमत्यावेशेन। मया खलु ज्ञातम्। ब्रवीतु तावद् वाचि कीदृशोऽसाविति।'

'महात्मन् ! किं कथयानि ? नितरां मधुरभाषी मनाक् चास्पष्टवागसौ।'

'नारायण ! अस्तु तावत्। ननु ब्रवीतु भवान्। अप्यसौ 'भगवन्' इत्येतत् सम्बोधनपदोच्चारणपूर्वकमभाषत प्रायशः ?'

'महात्मन् ! कथं नु भवता ज्ञातमेतत् ? एतत्सम्बोधनपदोच्चारणपूर्वकमेवाभाषतासौ। अतएव 'भगवन्' इति संज्ञामलभतासावस्मासु विनोदप्रसङ्गेन। परं कथं नु भवता ज्ञातमेतत् ? कच्चिद् भवानपि स्मृतिपटलादपगतो मत्सहाध्यायी तु नास्ति ?'

'नारायण ! कथं न्वेतत् स्यात् ? भवांस्तु विश्वविद्यालयमुद्दिश्यैवं ब्रवीति यावदहं तु निरक्षरप्रायोऽस्मि। विश्वविद्यालयस्तु कश्चिन्मयैतावता कालेन दृष्टोऽपि न, का वार्ता पुनः तस्मिन्नध्ययनस्य। अहं तावदाश्रममेनमभिलक्ष्य ब्रवीमि। ननु शृणोतु भवान्। त्वदीयमोमानन्दं गुरुमहाराजोऽत्रैवानयत कुम्भमेलकात् पञ्चत्रिंशद्वर्षपूर्वम्।'

'आश्चर्यं खल्वेतत्। अत्रैवानयत ! गुरुमहाराजः ! मदीयमोमानन्दम् !'

'आम्। नारायण ! ओमानन्दो न केवलमानीत एव, न्यवसदप्यसावत्रैव पञ्चवर्षाणि।'

'महात्मन् ! अपि भवता सह ?'

'आम्। गुरुमहाराजस्य निर्देशने। कच्चित् स्मरति भवान् यत् खलूक्तं मया दिनद्वयपूर्वमात्मसहयोगिनमभिलक्ष्य ? असौ त्वोमानन्द एवासीद् यत्सहयोगेन तावद् गुरुमहाराजस्य निर्देशान्मया बह्वीर्गुहा उद्घाटिताः, वन्यपशवः पोषिताः, वृक्षाश्चारोपिताः। किं बहुना गुरुमहाराजादिष्टानि सर्वाण्येव कार्याणि तत्सहयोगेनैव सम्पादितानि तेषु दिवसेषु। नारायण ! आश्रमपदस्यैतस्याभिवर्धनकर्मणि भृशमध्यवसितं तेन।'

'महात्मन् ! अप्येतावानध्यवसायी संवृत्तोऽसावत्र ?'

'नारायण ! अध्यवसायी त्वसावासीदेव, महापण्डितोऽप्यासीत् । यत्किञ्चिद् गुरुमहाराजेनोपदिष्टं तत्सर्वमपि सद्य एवावबुद्धं तेन। परं तद्दृष्टिस्तावत् प्रतिक्षणमात्मावबोधे एवाबद्धासीत्। नैकविधक्रियाव्यापृतोऽप्यसावासीत् सतत-मात्मान्वेषणपरः। नारायण ! तत्रापि तावत् पश्यतु भवांस्तद्वैदग्ध्यम्। अचिरेणैव कालेनासौ सर्वा अपि तास्ता मानसीर्भूमिका अत्यक्रामद् यास्ताव-ज्जन्मजन्मान्तराध्यवसायपर्यवसायिन्यः। इन्द्रियव्यापारेभ्यस्त्वसौ प्रकृत्यैवोपरत आसीत्। गुरुमहाराजस्यानुग्रहवशादसौ स्वल्पेनैव कालेनावचेतनमनसि तथैव प्रविवेश ततश्च निष्क्रमितुमपारयद् यथा भवदीये स्वप्नेऽसौ सङ्कीर्णद्वारायामपि गुहायां सद्य एव प्रवेशमलभत गुरुमहाराजमनुसरंश्च झटित्येव बहिर्निर्गतः।'

'महात्मन् ! सुतरां भावोद्बोधिनी खलु भवदीया व्याख्या। तर्हि किमेवं न मन्येद् यत् स्वप्नोद्भाविता गुहा तावदवचेतनं मनोऽवबोधयतीति ?

'नारायण ! सम्यगवबुद्धं भवता। अन्यथा गुहाप्रवेशस्य प्रसङ्ग एव कथमागच्छेद् भवत्सकाशम् ? पश्यतु भवानोमानन्दस्य वैचक्षण्यम्। यस्मिन्न-वचेतनप्रवेशकर्मणि भवतैतद्विधं कष्टमनुभूतं यथा वेपथुरोमाञ्चौ सम्प्रत्यपि भवन्तं न त्यजतः, तस्मिन्नेव कर्मण्यनायासं पारङ्गतोऽसौ मनागपि भयं न मेने।'

'महात्मन् ! यद्येवं तर्हि स्वप्नागतास्ते हिंस्रपशवोऽप्यवचेतनप्रतिवासिन एव स्युः ?'

'नारायण ? सत्यमाकलितं भवता। आकस्मिकप्रवेशिनमवचेतनशक्तय एतास्तथैवाक्रामन्ति यथा खलु स्वप्नोद्भावितैर्हिंस्रपशुभिर्भवादृशो जन आक्रान्तः। प्रायशः सर्वेषां साधकानां समक्षं मानसी भूमिरेषा समायाति। अनभिज्ञमार्गास्तु स्वप्नद्वारेण प्रवेशं लब्ध्वाऽनुभववैचित्र्यं चावाप्यापि तत्त्वं नावबोधन्ति। नारायण ! दुर्गमः खल्वध्यात्मपन्थाः। तथाप्योमानन्दस्य त्वेष नितरां सुगमः संवृत्तः। अचिरेणैव कालेनासौ रजकक्षालितपरिधानवन्निर्मलः सञ्जातः प्रफुल्ला-रविन्दवच्चाविर्भूतात्मसौरभसम्पत्तिः। साधनायां रत एतादृश एव जनो गुहा-वासाय कल्पते। अन्यथा त्वाभ्यन्तरबाह्योभयविधा एव व्याघ्राः सिंहा भल्लूका व्याला वृकाश्च भयमुत्पादयन्ति तस्मिन्। यन्मनसि तु तमस्ततम् कथं न्वसौ गुहास्थिते निविडे तमसि नित्रसितुमर्हेत् ? यन्मनसि च रजोऽधिराजते, कथं नु स गुहायां शान्तिमाप्नुयात् ?'

'महात्मन् ! नितरां दुष्करं खल्वेतत् ।'

'नारायण ! दुष्करं त्वेतदस्त्येव । भवांस्तु स्वप्नगुहायामेव व्याकुलीभूतः । का वार्ता पुनर्यथार्थगुहायाः ! पश्यतु भवांस्तावत् स्वमित्रस्य निर्भीकत्वम् । पुरोवर्तिपाषाणसम्पुटस्याधस्तादस्त्येका गुहा । अपि दृष्टा सा भवता ?'

'महात्मन् ! पूर्वेद्युरुभाभ्यामेवावाभ्यां दृष्टा सा । नरेन्द्र ! मन्ये, तामेवाभिलक्ष्य वदति भवान् यां दृष्ट्वा तन्निवासाय मम मनस्यजायतोत्साहः ।'

'भ्रातृवर ! स्यान्नाम सैवे'ति प्रत्यवदन्नरेन्द्रः ।

'नारायण ! किमर्थं 'स्यान्नामे'ति ? यत्सत्यं सैवास्ति । प्राक् तु साऽऽसीत् सङ्कीर्णाकारा । कश्चिदजगरश्च तस्यां कदाचिन्निवासं चकार । एकस्मिन् दिवसे कन्दमूलाहरणाय यदाऽऽवां तत्र गतावास्व तदैवोमानन्दस्य मनसि जातं कच्चिन्निवसेमत्रेति । नारायण ! कुलिशहस्तस्त्वसावासीदेव । अथ सद्य एव प्रविश्योत्खननं प्रारभत । कतिपयैरेवाहोभिरेतादृशं विस्तारं नीता सा । तदनन्तरं गुरुमहाराजेन मासद्वयपर्यन्तं तत्रैव निवसितुमाज्ञप्तः सः । तत्रासौ किमकरोदिति तावन् मयापि न ज्ञातम् । गुरुमहाराजेन त्वहं वारित आसं न कथमपि व्युत्थापनीयोऽसाविति ।'

'महात्मन् ! किमभवत् ततः परम् ?

'नारायण ! मासद्वयानन्तरं सहसाऽऽदिष्टोऽहं गुरुमहाराजेन—'ब्रह्मचारि ! गुहाद्वारं गत्वाऽऽनयोमानन्दमि'ति । यत्सत्यं कार्यान्तरव्यापृतत्वादहं तावद् दिवसगणनां व्यस्मरम् । नारायण ! आश्रमपदं त्वेतदासीत् तेषु दिवसेषु निर्माणाधीनम् । बहूनि कार्याण्यासन् निष्पाद्यानि प्रतिदिनम् । क्वचिद् भूमिशोधनं क्वचिद् गुल्मव्यवस्थापनं क्वचिदाहतपशुचिकित्सा क्वचित् परित्यक्तपक्षिशावकशुश्रूषा कदाचित्समिदाहरणं कदाचित् कन्दमूलोत्खननं कदाचिज्जलादानं कदाचित्पुष्पचयनमित्येतैर्व्यापारशतैर्व्यापृतावास्वाहञ्चोमानन्दश्च तदानीम् । ओमानन्दे गुहायां प्रविष्टे सति तु कार्यजातं ममैव स्कन्धे आपतितम् । अथ विस्मरणं स्वाभाविकमेवासीत् । आपाततो गुरुमहाराजेनादिष्टोऽहं सुप्तोत्थित इव प्रकम्पमानगात्रो सत्वरमेवागच्छं गुहाद्वारम् । उपसृत्य च किमपि दूरादेवापश्यं तद्द्वारमद्भुतप्रकाशेनोद्भासमानम् । 'गुहाद्वारं तावत् पूर्वाभिमुखम् । सूर्यश्चास्त सम्प्रत्यस्तोन्मुखः । कुतोऽयं प्रकाशस्तर्हि ?' एवं चिन्तयन्नेव यदा द्वारसमीपमगच्छं तदाऽपश्यमद्भुतज्योतिर्विच्छुरिताननं पद्मासनस्थं शाम्भवीमुद्राव्यवस्थापितनेत्रयुगलम् आनन्दाप्लावितमुखमण्डलमोमानन्दम् । स्तब्धप्राय इव

तत्रैव स्थित्वा यावदचिन्तयं कथं नु खलु गुरुमहाराजस्याज्ञा प्रस्तूयेति तावदुद्भावितान्तःकरण इवासौ शनैः शनैर्नेत्रे उदमिषत् स्मितविच्छुरिताधरोष्ठश्च मन्दं मन्दं वक्तुं प्रारभत—'भगवन् ! अप्यागतोऽसि । चलाम्येव '

'अथ शनैरुत्थाय गुहायाश्च निर्गत्य प्रहृष्टमना आश्रमपदोन्मुखं प्राचलत् सः । तमेवानुसरन्नाश्रमसन्निधावागत्य चापश्यमितोदत्तदृष्टिमुल्लसिताननं सकौतुकमावामेव प्रतीक्षमाणं सुखासनस्थं गुरुमहाराजम् । दृष्ट्वा च तं स्खलितपादोऽपि त्वरितगतिर्गद्गदकण्ठोऽप्युच्चारितप्रणतिपदश्चरणयोरुपरि तस्य साष्टाङ्गं न्यपतदसौ । गुरुमहाराजेन च बाहुभ्यामुत्थाप्य सस्नेहं साह्लादं च कण्ठे आश्लिष्टो मधुरया गिरया चैवमभिनन्दितः—

'ओमानन्द ! ननु सन्तुष्टोऽस्मि, परिसमाप्ताशेषकृत्योऽस्मि । त्वया खलु मदीयं जीवितं सार्थकतां नीतम् । शताभ्यधिकवर्षीयस्य जीर्णीभूतस्य मच्छरीरस्य नास्ति काचिदुपयोगिताऽतः परम् । यत्किञ्चिद्रिक्थं पूज्यपादेन गुरुणासीन्मयि निक्षिप्तं यत्किञ्चिच्च ज्ञानलवमासीन्मयात्र निवसतार्जितं तत्सर्वमपि मया त्वयि सम्प्रति सङ्क्रान्तम् । एषा सनातनभारती गुरुशिष्यपरम्परयास्ति कथञ्चिदेतावत्पर्यन्तमक्षुण्णरूपेण सुरक्षिता । पश्य तावत् कियतायासेनास्त्येषा त्वयैवोपार्जिता । अशेषमपीन्द्रियभोगं विसृज्यैतदर्थमेवागतोऽसि त्वं हिमगिरेरुपत्यकायामेतस्याम्, सकष्टं निवसस्येतस्मिन्नाश्रमपदे, क्लिष्टं तप आचरसि, एकान्तं चोपसेवसे । कियतायासेन पुनर्मयैव त्वमानीतोऽस्यत्र । यथा यथा मदीयं शरीरमेतज्जीर्णत्वोन्मुखीभूतं तथा तथा मयि चिन्तोपचिता कस्मिन्नु खलु रिक्थमेतन्निदधानीति । दशाभ्यधिकवर्षेभ्यस्तावदस्मि सत्पात्रान्वेषणपरः । यदा प्रभृति त्वं वाराणस्याश्चलित्वा हिमालयोन्मुखीभूतोऽसि तदा प्रभृत्येवास्म्यहं गङ्गापुलिने त्वां प्रतीक्षमाणः । पुनश्चाहमेव स्वगुरुपादेन कियत्कष्टपूर्वकमस्म्यानीतः ! तस्मात्पूर्वतरमप्येवमेव घटितं स्यात् । पार्श्वस्थासु गुहासु यान्यस्थीनि तावद् युवाभ्यां गतवर्षे उत्खातानि तानि त्वेतज्ज्ञानयज्ञार्पिताहुतय इव मन्तव्यानि ।

'वत्स ! अधीताम्नायोऽसि त्वम् । अथाकथितमेव ज्ञातुमर्हसि कियतायासेनानीता मधुविद्या पृथिव्यामेतस्यामिति । महातपस्विने दध्यङ्नामर्षये किल विद्यामेनां ददाविन्द्रः । तत्रापि समयः कृतः तेन न कस्मैचित् प्रदेयैषा, अन्यथा निकृत्तशिरस्को भविष्यतीति । अत एव मधुप्रियाभ्यामश्विभ्यां विद्यैषा किलाश्वस्य शीर्ष्णा श्रुता । एवं देवा अपि सन्त्येतल्लुब्धाः, का कथा पुनर्मनु-

ष्याणाम् । मनुष्यैस्त्वेतन्निमित्तं गृहं त्यक्तम्, अरण्येषूषितम्, गुहासु निवसितम्, अथ च किं किं न व्यवसितम् । एषा विद्यैव स दिवोनिधिर्यो वेदेषु गुहाहित इत्याम्नातः । यथा कश्चित् पक्षी स्वीयेनौष्ण्येनाण्डान्तर्गतं गर्भं प्रकटीकरोति, एवमेवार्षिभिरात्मतपसोपार्जिता विद्यैषा । एषा विद्यैव तत् समुद्रमन्थनोपजातममृततत्त्वं यन्निमित्तं किल बभूव देवासुरसङ्ग्रामः । एषैव सा धेनुर्या खलु पणिभिरपहृत्य गुहायां तिरोहिता । एषा विद्यैव नु वृत्रनिरुद्धं तज्जलं यस्य विमुक्त्यै सततं यतते इन्द्रः । तज्ज्योतिरप्येषा विद्यैव यत्त्वसुरैर्निर्वापयितुं चेष्टयते देवैश्च परिरक्षितुम । एषैव सा विद्या यन्निमित्तं तिरश्चकार नचिकेता यमप्रदत्तं निखिलमपि वैभवम् ।

वत्स ! एतावता नु ज्ञातुमर्हसि कियन्मूल्यवती विद्येयमिति । प्रथमं तावन्मूल्याङ्कनकारिण एवैतस्या दुर्लभाः । प्रत्यक्षेषु भोगेषु सत्सु को नामैतद्विद्याया आनन्दमभिप्रीयेत । यत्सत्यमस्मन्निर्माणविधिरेवैतादृशो यद्वयं प्रकृत्यैव पराग्दर्शिनः । विषयेन्द्रिययोरेतादृशं सायुज्यमस्ति विहितं विधात्रा यदस्मच्चित्तवृत्तिः स्वभावत एवास्ति विषयोन्मुखी । निरन्तरपरिवर्तमानो विषयचित्रपटस्तावदनुक्षणमभिनवमाकर्षणं प्रस्तूय तत्त्वाभिध्यानावसरमेव न ददाति चित्तवृत्तये । कश्चिद्धीर एव पुरुषो विषयाणां विनाशशीलत्वं तल्लभ्यसुखस्य च क्षणिकत्वमवगम्यात्मोन्मुखो भवितुमर्हति । परन्त्वात्मतत्त्वस्य गाम्भीर्यमवगम्य तद्दुर्बोधतां चाकलय्यैतादृशो धीरोऽपि जन आत्मानात्मयोर्मध्ये दोलायमानोऽन्तरैव तिष्ठति प्रायशः । एतादृशा एव मनीषिण आचारशास्त्रं प्रवर्तयन्ति तत्माध्यमेन च सामाजिकं स्थैर्यं चिकीर्षन्ति । परन्त्वाभासमात्रमेवावतरत्यात्मतत्त्वस्याचारशास्त्रे । तेनाभासेनापि महद्धितं साध्यते समाजस्य । अन्यथा तु विशीर्येतैषः । सम्प्रति त्वाचारशास्त्रमपि सशङ्कितदृष्ट्यैव विमृश्यते । इन्द्रियसंवेदनोपजातज्ञानलवसंयोजननिर्भरेण भौतिकविज्ञानेनाधुना विषयसुखप्रदपदार्थोपलाभचाकचिक्यमुपस्थाप्य जनमानसस्तावदात्मावधानादस्ति निवारितः । अथाधिकाधिकसुखदपदार्थसङ्ग्रहनिरतैः, अहमहमिकाप्रचोदितमानसैः उत्फुल्लाहंकारैर्जनैः राष्ट्रैश्चेतरेतरसहयोगछद्मनेतरेतरविनाशोपाय एव विनियुज्यते सम्प्रति । विनाशोपायाश्चाप्युत्तरोत्तरं घातकतरा भवन्ति । यदा खल्वेकेन प्रहारेणैक एव जन आहतो बभूव तदापि सङ्ग्रामेषु लक्षशोऽपि जनाः पञ्चत्वं नीताः, बह्वीर्नगर्यो ध्वस्ताः संस्कृतयश्च विनाशं प्रापिताः । सम्प्रति त्वेकेनैवाणविकप्रहारेण कोटिशोऽपि जना घातयितुं शक्यन्ते, नैका नगर्यश्च विलोपयितुम् । अहमहमिकाबद्धमानसानां राष्ट्राणां मध्ये केचिच्चेदणुशक्ति-

मुपार्जितुमर्हेयुः, प्रवर्तितेऽन्योन्यसङ्ग्रामे चैनां प्रयुञ्जेयुः, तर्हि का गतिः स्यादेतस्याः तपस्विन्याः पृथिव्याः ! यत्सत्यमशेषजीवनतत्त्वविनाशव्यतिरिक्तं न सम्भाव्यते विकल्पान्तरम् ।'

'गुरुदेव ! एवमपि भविता किम् ?'

'वत्स ! आश्चर्यवत् प्रतीयते त्वामद्यैतत् सर्वम् । परन्त्वनुदिनमुपचीयमाना विध्वंसवृत्तिरेनामाश्चर्यमयीमपि स्थितिमनतिदीर्घेणैव कालेन सत्यापयितुमर्हति ।'

'गुरुदेव ! तदा तु महती क्षतिर्भविष्यति ।'

'वत्स ! दैवदुर्विपाकादेतस्मिन् दुर्घटे व्यापारे घटिते सति को नाम हताशं जीवनतत्त्वं समूलविनाशाद् वारयितुं शक्नुयात् पृथिव्यामेतस्याम् ? यदा न्वेकपद एवाणुशक्त्यानेकस्थाने आहता वसुन्धरैषा तप्तायःपिण्डवदुष्णीभविष्यति तदा कः खलु जीवितुं शक्ष्यति ? तापाधिक्यमसहमानं जीवनतत्त्वं धराया अपसरिष्यति, नगरस्था अट्टालिका भस्मीभविष्यन्ति, वृक्षगुल्मादिकं कृष्णाङ्गारत्वं गमिष्यन्ति, उत्तुङ्गशिरस्को हिमवांश्चूर्णीभविष्यति, ऊर्मिलः सागरमण्डलश्च प्रतप्तकटाहवद् वाष्पनिचयमुत्स्रक्ष्यति ।'

'गुरुदेव ! एतत्पर्यन्तमपि भविता किम् ?'

'वत्स ! कथं न भविता ? पश्य तावत् कीदृशीयं विडम्बना यस्यां तु मानवता सम्प्रति पदं कारिता । शक्नुयात् कश्चिद्विज्ञानविदेनामपवारयितुमित्याशंससे चेत् त्वं तर्ह्यसम्भाव्यमेवोपकल्पयसि । इन्द्रियप्रत्यक्षोपजातसंवेदनोपयोजनमात्रनिर्भरोऽसौ वराकः कथं नु खल्वस्तित्वमूलामेनां समस्यामैकमात्रबुद्धिबलेन समाधातुं शक्नुयात् ? यत्सत्यमिन्द्रियप्रत्यक्षनिर्भरबुद्धिबलमात्रावलम्बिना तेनैवैषा दुरवस्था सम्प्रत्युपजनिता । अहङ्कारेऽहङ्कारान्तरबाधनशीले सति, अहङ्कारपरवशो विज्ञानवित् कथं नु खलु सार्वभौमहितपरो भवितुमर्हेत् ?'

'गुरुदेव ! तर्हि नास्ति कश्चिदुपायः किं मानवस्य रक्षणाय?' इति विषण्णवदने ओमानन्दे उक्तवति पुनरपि वक्तुमारभत गुरुमहाराजः ।

'वत्स ! अलमनया निराशया । चैतन्य एव तस्मिन् वर्तते उपायो यस्मात्त्वेषा वाण्युद्भूता । चैतन्यचालितं तावज्जगत् । ईश्वरीयं चास्ति चैतन्यम् । अस्तित्वबोधायैव सृष्टं स्यादेतत् । अथास्तित्वपोषकेन भवितव्यमेतेन न त्वस्तित्वापलापकेन । विज्ञानाभिवृद्धिसमकालं पृथिव्येषा चेद् विध्वंसोन्मुखी जाता तर्हि विज्ञानेनैव तत्र कारणेन भवितव्यमेकान्तत इति तावन्नानुमेयम् ।

विध्वंसकारणं तु यत्सत्यमहङ्कार एवास्ति। समष्टिवशीकारपूर्वकं व्यष्ट्युप-चयकारी खल्वेषः। वशीचिकीर्षिता समष्टिश्च व्यष्टिसङ्घातस्वरूपैव। अथ वशीकरणप्रसङ्गे नाहंकारोद्वेलिता व्यष्टिर्व्यष्ट्यन्तरमुद्वेजयति। एतस्मादेव जायते व्यष्टीनामन्योन्योच्छेदपरत्वम्। अशेषेऽप्येतस्मिन् व्यापारे बुद्धिस्तावत् करणवत्प्रयुज्यते। उपार्जितप्रभूतविज्ञानशक्तिः सा संवृत्तेदानीमपकृष्टाहंकार-प्रयोज्या। एषैवास्ति साम्प्रतिकी विडम्बना। यथा खलु बालहस्तगृहीतेतस्ततश्च चालिता च्छुरिका पार्श्ववर्तिनां जनानां भयकारणं भवति तथैव विज्ञान-समृद्धा बालिशाहंकारपरिगृहीता च बुद्धिरशेषजनानां समक्षं महतीं विभीषिका-मुपस्थापयति सम्प्रति। विज्ञानं नाम नास्ति विनाशकारणम्। विनाशकारणं त्वस्ति बालिशोऽहंकारो यस्तावद् विज्ञानं विनाशकर्मणि प्रयुङ्क्ते। अथ विनाशस्य परिवर्जनाय सम्प्रत्येषोऽहंकार एवास्ति चिकित्सितव्यः।'

'गुरुदेव! का नु खल्वस्त्यहंकारस्य चिकित्सा?' इत्यपृच्छच्चिन्तारेखा-ङ्कितभाल ओमानन्दः।

'वत्स! त्वं तु जन्मनैवास्यहंकारशून्य' इति वक्तुमारेभे गुरुमहाराजः। 'अतएव न जानासि कथं नु खल्वहंकारोऽस्ति चिकित्सितव्य इति। यथौषधनि-चयसमृद्धोऽपि कश्चिद् भिषगनवाप्तरुग्णजनो न जानीयात् कुत्र नु खल्वौषधं प्रयोजनीयमिति, एवमेवाहंकारचिकित्सासाधनसम्पन्नोऽपि त्वं स्थान एव नावगच्छ-स्यात्मशक्तिप्रयोगविधिम्। वत्स! एतस्मादेव कारणाद् वृतो मयैषोऽवसरस्त-वानुशासनाय। यथा खल्वधिगतविज्ञानोऽपि कश्चिज्जनः प्रयोगं विना स्वकीयं विज्ञानं नैरर्थ्यं नेतुमर्हति, एवमेवावाप्तज्ञानशक्तिरपि त्वमकिञ्चित्करो भवितुं शक्नोषि।'

'गुरुदेव! किमेवमपि स्यात्?'

'वत्स? नास्ति मदीयाऽऽशङ्का निराधारा। एतस्मिन्नेव हिमवत्प्रदेशे ज्ञानिनोऽभूवन्नेतादृशाः यैः खल्वशेषापि भूमिरेषा दिव्यीकर्तुमशक्यत। परन्तु सामान्यजनजीवननिरपेक्षैस्तैः प्रयास एव न कृत एतन्निमित्तम्। अथोपार्जिता निखिलाप्यादृशोन्नयनशक्तिस्तैर्वैश्वचैतन्यराशौ समाहिता। पूर्वं त्वेतज्ज्ञानशक्ते-रेतादृश्यावश्यकतापि नाभूत्। मानवस्य संहारकत्वं कदाप्येतद्विधं नाभूत् यथाऽशेषापि भूमिरुच्छेदोन्मुखी स्यात्। यत्परिमाणा संहारशक्तिरुपतिष्ठति ततोऽपि महत्तरपरिमाणा शक्तिरपेक्ष्यते तन्निरोधाय। सा शक्तिः, वत्स! अस्त्यु-पार्जिता त्वया सम्प्रति ध्यानयोगेन। इदानीं विनियोगमपेक्षते सा।'

'गुरुदेव ! क्वास्ति शक्तिः सा मयि कथं च विनियोजनीया सा ? निर्दिशतु मे भवान् पन्थानं यथाहं किमपि मानवहितसाधकः स्याम । यत्सत्यं तु तथाकुर्वता मयाऽऽत्मकल्याणमेव विहितं भविता । गुरुदेव ! नास्ति मच्छरीरे कश्चित् क्लेशो मन्मनसि वा काचिदाकांक्षा । तथापि न जाने कीदृशी वेदना सूचिकाग्रमिवाहर्निशं भिनत्ति मां, मानसं चोद्वेलयति मे । सम्प्रति त्ववगतं मया तत्कारणम् । यदा खलु पृथिव्यामेतस्यां कश्चित् क्वचिदुत्पीडयते तदा तत्पीडा प्रतिफलति मच्छरीरे । गुरुदेव ! यत्सत्यं तु नाभिजानामीदमित्थं क्वास्ति मच्छरीरं नाम । न दृश्यते मे कश्चिद्विशेषो मच्छरीराभिधे आभोगे एतस्मिन् । सर्वाण्येव शरीराणि मच्छरीरत्वेन प्रतिभान्ति मे सम्प्रति । क्वास्म्यहं पृथग्भावेन ? मानसप्रसारमिव लक्ष्यतेऽशेषमपि जगन्माम् । जगज्जीवनं तावन्मज्जीवनम् । जगदामोदस्तावन्मदीयामोदः, जगत्पीडा च मदीया पीडा । कथं नु खलु संवृत्तमेतदेकपद एव ! दर्शयतु मे भवान् आत्मकल्याणपन्थानं यथात्महितं चरेयमहम् ।'

'वत्स ! अलमत्यावेशेन । निर्दिशामि ते पन्थानम् । वत्स ! आत्मकल्याणार्थमात्मावबोधस्तावत् कर्तव्यः । न ह्यविज्ञातात्मा कश्चिदात्महितं परहितं वा साधयितुं क्षमते । त्वं त्वात्मज्ञोऽसि संवृत्तः । येन ज्योतिषाऽऽप्लावितमासीत् त्वदीयमध्यात्मसंस्थानं तत् त्वात्मज्ञानसम्भवमेव । तत्तु मया सम्प्रत्यप्यवलोक्यते त्वच्छीर्ष्णः समन्तात् । केवलं वेगप्राबल्यात् तदवाप्तिमार्गस्त्वया नाध्यातः । त्वत्कृते तु सर्वमेतन्निष्प्रयोजनमेव । उपगतगन्तव्यो ह्यसि त्वम् । परं तज्जिगमिषूणामितरेषां जनानां कृते तु तदवगतिरपेक्ष्यत एव । अथ तेषां नेतृत्वार्थं त्वयापि सम्यग्ज्ञेयो मार्ग एषः ।'

'अवश्यमेव, गुरुदेव ! परार्थ एव मदीयः स्वार्थ इति निर्भ्रान्तं प्रतीयते माम् । विज्ञापयतु भवान् मार्गमेनम् ।'

'वत्स ! विचित्रा खल्वध्यात्मगतिः । मानवव्यष्टिस्तु देशकालपरिच्छिन्ना, परमध्यात्मनि सा देशमप्यतिशेते कालमपि । यथा यथा कश्चिदध्यात्मनि प्रवेशं लभते तथा तथाऽऽत्मविस्तारं भजते । यथा खलु गगनस्थाः कृष्णगुहाः शून्येऽपि शून्यतरत्वं तन्वन्ति, प्रकाशं पिबमानाश्चापि कृष्णत्वं भजन्ते, एवमेवाध्यात्मगुहा देशकालयोर्मध्ये आयामान्तरमेवोपस्थापयति । चैतन्यतारकस्याधस्तात् त्वेषा गगनगुहेवानुक्षणमनुभूतिप्रकाशं पिबन्ती सततं कृष्णतरत्वं भजते । अथ सा जनसामान्यस्य नितरां भयकारिणी भवति । एतस्या एव भयवशाज्जना एकान्तभीरवो भवन्ति, ध्यानाच्च पलायन्ते । ते तु न जानन्ति यत् तमोगुहेव प्रतीय-

मानाऽध्यात्मदर्येषाऽऽत्माभ्यन्तरेऽमृतं ज्योतिः तिरोधत्ते। यथा यथाऽन्तर्हृदि प्रविश्य कश्चिदेतस्यां तमोगुहायामभिध्यायति तथा तथाऽन्तर्निहितं ज्योतिः प्रकाशते तन्मनसि। पार्थिवगुहानिवासस्तु भौतिकप्रकाशनिरोधपूर्वकमध्यात्मगुहायाः कार्ष्ण्यमभिवर्धय्यान्तर्ज्योतिष उन्मीलने साहाय्यं यच्छति। वैयक्तिकनिर्वैयक्तिकचैतन्यरश्मिनिगीरणकृष्णीकृतावचेतनमनोदरीमतिक्रम्य यदा साधकः ततोऽपि दूरस्थे अध्यात्मनि प्रविशति तदा साक्षात्कुरुते आत्मस्थं चैत्यपुरुषम्।'

'गुरुदेव ! कोऽयं चैत्यपुरुषो नाम ?'

'वत्स ! चैत्यपुरुषो नामाध्यात्माधिष्ठाता। अहंकारमतिशेत एषः। यावदहंकारः स्थूलशरीरप्राणमनस्संघातमधिराजते तावच्चैत्यपुरुषः सूक्ष्मशरीरादिकमधितिष्ठति। सूक्ष्मशरीरादीनां विश्वव्यापकत्वाच्चैत्यपुरुषोऽपि वैश्वायामी भवति। चित्तत्त्वादसावव्यवहितं चैतन्यज्योतिर्लभते। अथ चैतन्यज्योतिष उत्स इव प्रतिभात्यसौ। तज्ज्योतिर्लब्ध्वाशेषमप्यध्यात्मसंस्थानं दीप्तिमत्तां धत्ते।'

'गुरुदेव ! अवितथं खलु भवदीयं वचः। यत्सत्यमेतस्यां ध्यानावस्थायामशेषमप्यध्यात्मसंस्थानं देदीप्यमानं भवत्यभ्यन्तरतः। चैत्यपुरुषे उन्मीलिते सति ज्योतिरित्रोदीयमानमभिलक्ष्यते तमसो मध्यतः। यथा खलु रात्र्यपगमे नैशान्धकाराभ्यन्तरत उदितेन ज्योतिषा प्रकाशवती भवति प्राची दिक् तथैवाहंकाराच्चैत्यपुरुषपदे उत्क्रान्ते सति आभ्यन्तरज्योतिषोद्भास्यतेऽध्यात्मसंस्थानम्। उद्भासश्चैष आनन्दं जनयति।'

'वत्स ! सत्यं ब्रवीषि। नितरामानन्दप्रदा खलु स्थितिरेषा। प्राप्यैनामानन्दाप्लाविता बहवः साधका अत्रैव विरमन्त्यारोहणात्। परं नास्त्येषा विरामभूमिः। प्रातर्ज्योतिषा नैषान्धकारे विरलत्वं नीयमाने सति स्वापेप्सुरलस एव कथ्यते। एष हि कार्यारम्भावसरो न तु स्वापस्य। एवमेव चैत्यपुरुषज्योतिषाऽज्ञानतमसि विरलीकृते सति साधकेनोद्युक्तेन भवितव्यमात्मसंस्काराय। यथा खलु प्रातर्ज्योतिष्युदिते सति परिमार्ज्यते आवासादिकं तथैव चैत्यपुरुषे उन्मीलिते सति परिशोधनीय आत्मा।'

'गुरुदेव ! एवं सति तु सुकरं स्यादात्मशोधनम्।'

'वत्स ! सुकरं तु भविष्यत्येव, परं न तथा यथा प्रतीयत एतत् प्रथमे कल्पे। जानास्येव त्वं नैकसोपानविधानकमध्यात्मसंस्थानमिति। प्रथमं तावदिन्द्रियसन्निकर्षाक्रान्तमहंकारकवलितं च मानससोपानमेव वर्तते। त्वया तु पूर्वजन्मसंस्कार-

वशादेवातिक्रान्तमेतत् । अथ स्वभावत एवोच्चतरमानससोपानारूढोऽभूस्त्वम् । एतस्मादेव कारणात् त्वं प्रकृत्या विरक्तमानसोऽसि । इन्द्रियरागविमुक्तः को नु खलु जडपदार्थोपसेवने नियोजयेदात्मानम् ? नचिकेतसाप्याचरितमेवमेव । वत्स ! नचिकेता तावत् मृत्युमुखे पतित्वा नचिकेताऽभूत्, परं त्वं तु सर्वप्रकारैकविभव-सम्पन्नः सन्नशेषजैवरागमध्यगतोऽपि नाचिकेतसवृत्तिकोऽसि संवृत्तः । त्वं हि वैराग्योपजनकोच्चतरमानससोपानादप्युत्थाय ज्योतिष्मत्सोपानेऽस्यारूढोऽना-यासेन । अथ त्वं ज्ञानप्रक्रियायां विचारणाविधिमत्यक्रामः । विचारणावैयर्थ्यानु-भूतिमतैव त्वया विश्वविद्यालयादपगतम् ।'

'गुरुदेव ! सत्यमुक्तं भवता । तदा तु नितरां ज्योतिष्मयमासीन्मन्मानसम् । तर्काश्रिता विचारणापि वैयर्थ्यमभजत् । परमेतत्सर्वं नीहारावच्छिन्नमिवासीत् प्राक् । भवत्पादपङ्कजस्पर्शेनैव जातं मयि दृष्टिविस्तारम् ।'

'वत्स ! एतदाश्रमपदमागत्यापगताज्ञाननीहारस्त्वमचिरेणैव कालेनाज्ञातमूलं ज्ञानालोकं लब्धप्रवेशोऽभूरसंशयम् ।'

'गुरुदेव ! स्मराम्यहमेतत् । नीहारेऽपगते सति न जाने कुतश्चित् समाया-तमालोकात्मकं प्रज्ञानम् । एतत्प्रज्ञानवता खल्वचिन्तितमपि बुध्यते, अप्रत्या-शितमपि ज्ञायते । परन्त्वेतस्मिन्नपि ज्ञानविधौ किमपि व्यवधानमवशिष्यत एव । गुरुदेव ! किं नु खल्वेतत् ?'

'वत्स ! एष तावदन्तर्ज्ञानसोपानः । एतदारूढ साधकोऽनायासमेव ज्ञानालोकमाप्नोति । आलोकश्चैष यदृच्छयाऽऽत्मानं कदाचिदाविष्कुरुते कदाचिच्च नाविष्कुरुते । बृहत्स्फुलिङ्गस्वरूपोऽप्येष न धारावाहिकः । अथ सत्यार्थावगत्यर्थं जिज्ञासुनात्र प्रतीक्षापरेण भवितव्यम् । पूर्वापरयोर्ज्ञानालोकयोर्मध्ये व्यवहितत्वात् कदाचिद् विरोधोऽप्युपजायते । आनुषङ्गिकोऽपि सन् विरोध एष विभ्रममुत्पा-दयत्येव ।'

'स्मरामि, गुरुदेव ! सोपानस्यैतस्य विभ्रमकारित्वम् ।'

'अतएव, वत्स ! अतोऽप्यूर्ध्वं गतिरपेक्ष्यते सिद्ध्यर्थम् । एतन्निमित्तमेव गुहायामेतस्यां प्रवेशितोऽसि त्वम् । अत्र निवसता त्वया यदवाप्तं तत्सर्वं तु त्वं जानास्येव ।'

'जानामि, गुरुदेव ! जानामि । असंशयं जानामि । यत् तु प्राक् कालव्यवहितालोकखण्डमिवोदपादि तत् सम्प्रत्येकाकारतां वैशद्यं च भजते ।

अनिर्वचनीयालोकाप्लावितमिव जानाम्यात्मानं निरन्तरम् । अशेषमपि जगत् मच्छरीरभूतमिव प्रतीयते, सर्वेषु च शरीरेषु प्रतिष्ठितोऽस्म्यहमिति सततमनुभवामि । अध्यात्मकेन्द्रस्थाऽणिमा सम्प्रति महिमानं भजते, जगच्चाशेषमपि तन्निश्वासभूतमिव प्रतीयते । गुरुदेव ! वचसा किम् ? भवांस्तु साक्षादेव जानाति मदीयं मानसम् ।'

'वत्स ! जानामि, ज्ञापयितुं चेच्छामि यदधिमानसारूढोऽसि त्वं सम्प्रति । आरुह्यात्र साधकोऽयं निजोऽयं च पर इत्येतद्विभाजनरेखामतिक्रामति । तद्दृष्टौ व्यष्टिः सामष्टिकं वैशद्यं भजते समष्टिश्च वैयष्टिकीमेकाग्रताम् । धन्योऽसि, वत्स ! त्वमारुह्य तस्मिन् सोपाने ।'

'गुरुदेव ! ज्ञानसागर एतस्मिन् विद्युत्सूत्रमिवावतरति यत् किं नु खल्वेतत् ? अनिर्वचनीयमस्त्येतस्य स्निग्धत्वं मनोहारित्वञ्च । एतस्य संयोगाद् ज्ञानसागरो दीप्तिमत्तरः संवृत्तः । यद्यस्ति विशुद्धज्ञानवत्ता क्वचित् सा त्वेतस्मिन् सूत्र एव । मन्ये, एतस्यैव सूत्रस्य मात्रामुपगृह्य ससंज्ञं संवृत्तमशेषमपि जगत् । अनुस्यूतमिव दृश्यते एतन्निखिलेऽपि जगति । एतत्संग्रथितमेव जगद् व्यवस्थामापद्यते । गगनमण्डले सत्वरं परिभ्रमन्तः कोटिशोऽपि तारका अन्योन्यैर्नाविघट्टन्त एतेनैव सूत्रेण निगृहीताः । एतत्प्रेरित एव कालः कलते देशश्च दिशते । अवर्णनीयोऽस्य सूत्रप्रचारः । उपरिष्टात् संततमिव पश्याम्येतत् सूत्रम् । कियती शक्तिः, कियती ज्ञानवत्ता, कियत्यानन्दमयता चैतस्मिन् सूत्रे ! गुरुदेव ! किं नु खल्वेतत् ?'

'वत्स ! विस्मितोऽस्मि । अननुभूतपूर्वं खल्वेतत् । अपि नाम तदेव तत्त्वमेतद् यत् खलु प्राक्तनै ऋषिभी ऋतचिदित्यभिहितम् । यद्येवं तर्हि देवा अप्येतेन प्रेर्यमाणाः नियम्यमानाश्च श्रुताः, का वार्ता पुनर्मानवस्य । अथ तत्त्वमेतदधिमानससोपानेऽवतारयितुं समर्थोऽसि चेत् तर्हि जगतो महद्धिताय संवृत्तोऽसि त्वम् । अनेनैवावतारेण क्लेशसागरं पारयितुमर्हतीयं वसुन्धरा । समतीतं युगं तद् यस्मिंस्तु जना ईश्वरभयवशात् सन्मार्गे चालयितुं शेकुः । 'सत्यं वद, धर्मं चर' इत्येतत्प्रकारकं नीतिवाक्यं प्रभावहीनं संवृत्तमधुना । सदाचारोपदेशः सम्प्रति प्रवञ्चनासाधनरूपेण प्रयुज्यते धर्मश्च जनशक्तिदुष्प्रयोगाय जातः । दूरेणातीतं युगं तद् यस्मिन् ज्ञानबुद्धेन भगवता बुद्धेनेतस्ततश्चरित्वा जना आचारोपदेशपूर्वकं प्रबोधिताः सन्मार्गावलम्बनाय प्रेरिताश्च । साम्प्रतिकं जनमानसमतीन्द्रियग्राह्यतथ्यपरम् । ततः परं सर्वं कल्पनाप्रसूतिमात्रमित्येषास्ति जनमानसे प्रतिष्ठितावधारणा युग एतस्मिन् । अथ, वत्स ! जनमध्ये चरित्वा

सदुपदेशेन तत्प्रबोधनस्य नास्त्यवसर इदानीम् । यथार्थपरास्ताद् याथार्थ्येनैव सन्मार्गे चालयितुमर्हन्ति । यथार्थभूतस्य तत्त्वस्य याथार्थ्यप्रतिपादनाय नापेक्षते कोऽप्युपदेशः । अङ्गुलिपिनद्धस्याङ्गुलीयकस्य दर्शनाय न प्रयोजनीयं दर्पणं नाम ।'

'तर्हि, गुरुदेव ! किमस्ति करणीयं मयेदानीम् ? अस्ति चेल्लोककल्याण-विधायिनी कापि शक्तिर्मयि, सा तूपयोजनीयैव ।'

'वत्स ! दिवसा मे पर्यवसिताः । कृतं च मे कृत्यजातम् । इदं शरीरं सम्प्रति पातापेक्षम् ।'

'गुरुदेव ! किमिदं श्रृणोमि ?'

'वत्स ! अवितथमेव श्रृणोषि । अलं विषादेन । नास्म्यहं स्वर्गकामी, नापि मुमुक्षुः । अत्रैव वर्तिष्य आत्मना । शरीरमपि मेऽत्रैव सेत्स्यति गुहायामेतस्याम् । केवलमुभावप्यन्योन्यपार्थक्यमपेक्षेते । पुनश्च ब्रह्मचार्ययमाश्रममिमं चालयितुं क्षमः । अथ मदीयमौर्ध्वदेहिकं संस्कारं विधाय सत्वरमेव पर्वतराजस्यास्य कमपि दुर्गमं प्रदेशं गत्वोषित्वा च तत्र यथाकामं लोककल्याणायातिमानससूत्रमिदं पृथिव्यामेतस्यां यथाशक्तिमवतारयितुं प्रयतस्व । किमर्थमहं त्वां दुर्गमे प्रदेशे प्रेषयामीति तु त्वं स्वत एवानुमातुं शक्नोषि । विकिरणशीलं ह्यस्मच्चित्तम् । जनसम्पर्कस्तावच्चित्तवृत्तिमेनां पोषयति । तद्गतो जन आत्मनिष्ठतामवाप्तुं महदायासमपेक्षते । अध्यात्मनि त्वस्ति तथाविधमधिष्ठानं यत्र खलु बाह्याः प्रभावा अगतिकप्रायाः । परन्तु विकर्षणमध्ये तत्प्रवेशस्तावद् दुस्साध्यः । लब्धप्रवेशोऽपि कश्चित् कियत्पर्यन्तमवस्थातुं शक्नुयात् तत्र ? जनान्तरप्रसता वृत्तयस्तु तदीयां वृत्तिमनुबद्धुं तथैव प्रतीक्षन्ते समन्ताद् यथा समवयस्काः शिशवो गृहाभ्यन्तर्गतं शिशुम् । असंशयं समाजमध्यगतेन योगिना सामाजिकः परिवेशो भृशं परिष्क्रियते । परन्तु सामाजिकपरिष्कारयज्ञाहुतात्मशक्तिर्योगी ऊर्ध्वमारो-हणायापचितपाथेयो भवति तदीयाऽध्यात्मगवेषणा च विरामं भजितुमर्हति । पुनश्च यदि सर्वेऽपि योगिनः समाजकल्याणपरा एव भवेयुस्तर्हि को नु खलु गूढतराणां रहस्यानामन्वेषणं विधास्यति ? पर्वतगुहासु त्वकिञ्चितकरो भवति सामान्यजनप्रभावः । तत्रस्थस्य योगिनोऽस्ति चेत् किमपि दर्शनीयं तत् त्वात्म-ज्योतिरेव, अस्ति चेत् किञ्चिच्छ्रवणीयं तत् त्वनाहतनादमात्रम् । अथ, वत्स ! तत्रैवोषित्वा जगद्रहस्यं सम्यगवबोद्धुमर्हसि त्वम् । सततपरिवर्तमानस्य जगतः पृष्ठदेशेऽस्ति शाश्वतसत्ताया एकतानता या खलु दुरवबोधा । प्रक्रिया-

शीलं जगदेवात्यन्तिकमिति स्वीकुर्वन्ति सामान्यजना व्यवहारे विज्ञानविदश्च सिद्धान्ततः। अनयैव प्रतीत्या प्रचोदितैर्विज्ञानविद्भिस्तावत् प्रक्रियाया एवान्वेषणेऽवसितम्। एतत्प्रतीत्यवस्थितैस्तैर्जगतः प्रक्रियामयत्वं तु सविस्तरमन्विष्टं परन्तु प्रक्रियायाः पृष्ठदेशेऽस्ति काचिदात्मनिर्भरा सत्तेत्येतस्मिन् विषयेऽस्ति गतिस्तेषां नितरामवरुद्धा। एतस्मादवरोधवशात् कर्तव्याकर्तव्यं गन्तव्यागन्तव्यं चाधिकृत्य भौतिकविज्ञानप्रवुद्धो मानवः कुण्ठितमतिरिवास्ति सम्प्रति। यथा हि गन्ता कश्चिदनिर्णीतगन्तव्यः तरिता वा कश्चिददृष्टपारः पर्याकुलो भवति तथैव प्रक्रियामात्रात्यन्तिकत्वदर्शी मानवोऽलब्धात्माधारभूमिर्नितरां खिद्यते !'

श्रुत्वैतन्मनागुद्विग्नमानस ओमानन्द उवाच—'गुरुदेव ! असंशयं जनाः खिद्यन्तेऽधुना। तेषां खेदापनयनाय चिकीर्षुरस्मि किमपि। परं किं तावत् करणीयं मयेदानीम् ?'

'विभ्रमितमानवतायाः खेदापनयनाय, वत्स ! त्वया सर्वतोभावेन प्रयतितव्यम्। पश्य तावद् विलासेप्सुर्मनुजः कियत्पर्यन्तमन्योन्यप्रधर्षणपरो जातः। जातिर्जात्यन्तरादुद्विजते, वर्णो वर्णान्तरात्, सम्प्रदायः सम्प्रदायान्तरात्, राष्ट्रं च राष्ट्रान्तरात्। नास्ति क्वचिच्छान्तिरिदानीम्, नास्ति क्वचित् सन्तोषः सम्प्रति। सौख्यप्रदायकविलाससाधनसङ्कलननिरतः साम्प्रतिको मानवो भ्रमत्यशेषेऽपि भूतले, उड्डीयते सुदूरं गगनमण्डले, अवगाहते जलधिम्, प्रविशति भूमौ, विदारयति पर्वतान्, निकृन्तति पादपान्, हन्ति पशुपक्षीन्, अवलुण्ठते जनान्, तथाप्यनवाप्तवाञ्छितसौख्योऽसौ प्रयासवैफल्यप्रकुपितः सन्नन्योन्यप्रतारणे इतरेतरयोधने, परस्परोच्छेदने चात्मानं नियोजयति। एषैव वृत्तिर्व्यापकत्वं भजमाना सती राष्ट्राणामुच्छेदाय कल्पते। अहंकाराधिरूढा प्रतिक्रियापरा च मानवबुद्धिः सङ्कटमेतद् व्यावर्तयितुं नास्त्यलम्। एतदर्थं, वत्स ! अपेक्ष्यते तदेवातिमानसतत्त्वं यत्तु त्वय्यस्त्याविर्भूतम्।'

'गुरुदेव ! यथाहं पश्यामि, समस्या त्वेषा दुस्साध्ये' त्यवदच्चकितदृष्टिरुन्नमितभ्रूश्चोमानन्दः। 'अथ कथं नु शक्ष्येऽहमेकाक्येव समस्यामेनां समाधातुम् ?'

'वत्स समस्या त्वस्ति दुस्साध्या। परन्तु दुस्साध्यतामेवैनामनुभूय समाधानार्थं वृतोऽसि त्वम्। शैशवादेवास्म्यहं त्वयि बद्धदृष्टिः। महतायासेनासि त्वमितोमुखः प्रेरितः। पुनश्चालमेकाकित्वाभिशङ्कया। अशरीरोऽप्यहं व्यापारेऽस्मिन् तव साहाय्यं विधास्यामि। सपद्येवाशेषमपि जगद्दूषणं निराकरिष्यते

त्वयेति त्वहं नाशासे। काले काले नैकैर्महात्मभिः प्रबोधितापि धरैषाद्यपर्यन्तं कथमपि निर्दोषा न जाता। यथा खलु जलाधिरूढं कालुष्यं सायासमपसारितमपि पुनराच्छादयति जलं तत् तथैव निराकृतप्रायमपि जगद्दूषणं मुहुर्मुहुरुपजायते।'

'तर्हि, गुरुदेव! अस्मत्कृतस्यापि प्रयासस्यैतादृशी दुर्गतिः स्यादि'ति प्रत्यवदताकुञ्चितभ्रूयुगल ओमानन्दः।

'वत्स! अलमनया शङ्कया। अपसारितं जलाधिरूढं कालुष्यं तूपसरिष्यत्येव। त्वत्प्रयासस्त्वस्त्यून्मूलनपरो न चापसारणपरः। दृष्टमेव स्यात् त्वया जलाच्छादकं कालुष्यं वृष्टयुद्बिन्दुभिर्व्यपोह्यमानम्। एवमेव त्वन्माध्यमेनावतारितमतिमानसतत्त्वं मूलत उच्छेत्तुमर्हति जगद्दूषणम्। सपदि तूच्छेदो न सम्भाव्यते। पश्य तावन्मध्याह्नेऽप्येतस्मिन् काले सन्ति बहवः पर्वतपादा यत्र तु तिमिरोऽवशिष्यत एव। एवमेवातिमानसप्रबोधानन्तरमपि जगद्दूषणं निरवशेषं न भविता। परमपचितं तु भविष्यत्येव। सम्प्रति तु निखिलमपि जगद् दूषणमयमेवाभिलक्ष्यते। समग्रापि वसुन्धरैषा वृत्रासुरकवलितप्रायेव दूषणभराक्रान्ता सती विनाशवारिधौ निमज्जमानेव प्रतीयते। अथापेक्ष्यतेऽद्य वृत्रवधक्षमो वज्रः तत्प्रयोक्ता चेन्द्रः। पृथिव्या मानदण्डभूते हिमगिरावेतस्मिन् समाधायात्मानमतिमानसशक्त्या निम्नाभिमुखीं मानवसंसृतिं निमज्जनान्निवार्य दिवोन्मुखीं कर्तुमर्हसि त्वम्।'

'गुरुदेव! संशयातिशायिनी खलु भवदीया वाक्, भवत्समर्पितं चास्मज्जीवितम्। भवदादेशं शिरसि निधाय क्वचिद् दुर्गमे हिमवत्प्रदेशे जिगमिषुरस्मि संवृत्तः। परमुत्पद्यते मे मनसि संशय एकः। यदा खलु शास्त्रकाराः शास्त्रिणश्चाहर्निशं जगदुद्धारपन्थानं निर्दिशन्तोऽपि जनमानसप्रबोधनव्यापारे अकिञ्चित्करप्रायाः संवृत्ताः तदा कस्मिंश्चिद् दुर्गमे हिमवत्प्रदेशे एकाग्रतां मौनं चावलम्ब्य वर्तमानेन मया किं कर्तुं शक्नुयात्?' इत्युक्त्वाऽवनमितशिरस्योमानन्दे उन्नमितभ्रूर्गुरुमहाराजोऽवदत्—

'वत्स! अवितथमेवोक्तं त्वया। समस्या त्वस्ति नितरां दुस्समाधेया। सन्मार्गेण गमयितुं जनान् मनीषिभिः किं नाम न कृतम्? राज्यं परित्यक्तं कैश्चित्, स्वजनाः परित्यक्ता बहुभिः, जीवितमपि विसृष्टं नैकैः। एवं ग्रन्था रचिताः, प्रवचनं कृतम्, सङ्घं संस्थापितम्, धर्मप्रचारकाश्च नियोजिताः। किन्त्वेवमपि मानवता श्वानपुच्छवत् प्रायशः पूर्ववदेवावतिष्ठति। अनुदिनोपची-

यमानाभ्यासवशान्महत्कौशलमुपार्जता मनुजेन तावद् भृशं जीवनसुखसाधनमस्ति संगृहीतम् । परमेतत्तु तिर्यञ्चोऽपि कुर्वन्ति न्यूनाधिकम् । दीर्घकालिकवंशानुक्रमोपचितसंस्कारवशात् कियत्संश्लिष्टाकारान् नीडान् निर्मान्ति खलु खगा: ! प्रकृष्टबुद्धिबलसम्पन्नो मानवश्चेत् कालक्रमेणैतादृशं जीवनसौविध्यमुपार्जितवान् तर्हि को विशेषस्तत्र ? पक्षिकृते नीडनिर्माणकौशलं यथा मूलप्रवृत्तिप्रेरितं तथैव मानवकृते जीवनसौविध्योपार्जनम् । परन्तु मूलप्रवृत्तिप्रेरितं कर्म पशुत्वान्मानवस्य नातिभेदाय । मनुष्यत्वं नाम धर्मविशिष्टम् । धर्मश्च साम्प्रतिके मानवसमाजे विकृताकारक: प्रस्तूयते प्रसार्यते च । यदा तावत् धर्मोपदेशका एवैवंविधा: संवृत्ता: तदा को नाम शृणुयात् तदुपदेशान् ? धर्मोपदेशस्तु सम्प्रति विक्रेय: संवृत्त:, क्वचिच्च वर्गविशेषस्य स्वार्थसाधको येन खलु परहितं हन्यते जनाश्च परस्परं योद्धुं प्रेर्यन्ते । को लाभस्तर्ह्येतेनोपदेशेन ? त्वमेव चिन्तय, वत्स ! केनोपदिष्टोऽसीति ।'

'गुरुदेव ! यत्सत्यं केनापि न । वृत्तिरेषा मदीया शैशवकाल एवाभ्यन्तरत आविर्भूता मयी'त्यवददङ्गुलीभि: शिरसि कण्डूयन्नोमानन्द: ।

'सत्यमुक्तं, वत्स ! त्वया । ज्ञानात्मिका वृत्तिर्ह्युभयथा प्रवर्तते, अभ्यन्तरतो बाह्यतश्च । बाह्यं ज्ञानं जीवननिर्वाहपरं भवति, आभ्यन्तरं चात्मोन्नायकम् । आत्मशक्तिप्रसूतं ह्येतत्, न त्विन्द्रियविषयसंस्पर्शजम् । अध्यात्मनि प्रविष्ट: साधक आत्मानं पश्यति, आत्मनोऽस्तित्वं चावबुध्यति । एषैव बोधवृत्तिस्तं धर्मकार्ये प्रवर्तयति । आत्मानभिज्ञो बाह्यज्ञानमात्रावलम्बी जनो न केवलमात्मविमुखो भवति, अपित्वात्मसंहारपरोऽपि । आत्मसन्निहितभूम्नोऽनभिज्ञता मानसक्लेशं जनयति, क्लेशश्च युयुत्साम् । व्यष्टिगता युयुत्सा सामष्टिके युद्धे परिणमते, अथ च सार्वदेशिके विनाशे ।'

'सार्वदेशिके विनाशे, गुरुदेव ! एतादृशो विनाशस्तर्हि येन केनाप्युपायेनास्ति परिहर्तव्य:' इत्यवादीन्नितरां व्यग्रमानस ओमानन्द: । 'तत्परिहारायात्मानमपि विसर्जितुं शक्नोम्यहम् । गुरुदेवो दिशतु मां पन्थानम् । कथं नु खलु जना आत्मप्रबोधवन्तो भवेयुरित्यस्ति मदीया चिन्ता ।'

'पौरुषसंवलिता चिन्ता, वत्स ! संकल्पं जनयति । पुनश्च संकल्प एव त्वया जनमानसोत्थापने विनियुक्त इति मयि हर्षोद्रेककर: संजात: । एतदर्थं त्वया भृशं तप आचरणीयम् । श्रुतमेव त्वयाऽऽम्नायात् सिसृक्षुप्रजापतिनाप्यादौ तप आचरितमिति । सम्प्रति तस्या: सृष्टे: रक्षणार्थमप्यपरं तपोऽनुष्ठेयम् ।

भस्मावशिष्टोऽग्निः पुनः प्रज्वालनमपेक्षते । अग्निस्त्वग्निनैव प्रज्वालयितुं शक्यते । एवमेवात्मबोधश्चात्मप्रबोधेनैव कारयितुं क्षमः । आत्मा त्वात्मनैवोद्धारयितुं शक्यते न चानात्मना । आत्मनः सर्वात्मकत्वादेकोऽप्यात्मास्ति चेत् सम्यक् प्रबुद्धः, तर्ह्यसौ सर्वेषां प्रबोधाय कल्प्येत । प्रदेशविशेषे उद्वेलितः समुद्रोऽशेषमपि सागरनीरनिचयमुद्वेलयितुमर्हति । अपेक्ष्यते तावत् तादृश्युद्वेलनशक्तिः । एक एव परमाणुर्भिन्नः सन्निखिलामपि धरां चालयितुं क्षमः । अपेक्ष्यते तावत् तदन्तर्हितशक्तेः सम्यक् चालनम् । एवमेव, वत्स ! योऽसौ चैतन्यमणिमा यदात्म्यं चेदं सर्वं, तच्छक्तिचालनेन समग्रोऽपि वैश्वात्मा शक्यते उद्बोधयितुम् । अपेक्ष्यते तावच्चैतन्यैकाग्र्यसामर्थ्यम् ।'

'अप्येतत्पर्यन्तं शक्यते विधातुं, गुरुदेव ?' इत्यपृच्छद् विवृतमुख उन्नमितभ्रूयुगलो रोमाञ्चितकाय ओमानन्दः ।

'असंशयं शक्यते, वत्स ! अपेक्ष्यते तावदात्मसंकल्पशक्तिः । त्वयि चास्ति सा भूयसी । अथाद्यैव गच्छ नितरां निर्जने कस्मिंश्चित् स्थले आत्मप्रबोधाय यथा त्वमशेषानेव जनान् प्रतिबोधयितुं शक्नुयाः । प्रतिबोधनाय नार्हिष्यसि, वत्स ! जनाज्जनान्तरमुपगन्तुम् । त एवागमिष्यन्ति त्वामध्यात्मप्रेरिताः ।'

'अप्येवं गुरुदेव ?'

'वत्स ! एवमेव । सम्भाव्यते तावत् प्रथमे कल्पे ते न जानीयुः किमर्थं त्वदभिमुखीभवन्ति त इति । निर्बोधपूर्वकमपि ऋतानुसारिणीर्बह्वीः क्रियाः सम्पाद्यन्ते । त्वमेव यदा हिमगिरिं प्रति प्रचलितः तदाप्यजानाः मत्सन्निधावागन्तासीति ? यत्सत्यं प्राणिनामभ्यन्तरेऽस्ति सा शक्तिर्या त्वबोधपूर्वकमपि सन्मार्गे नेतुमर्हति तान् । न ह्यध्यात्मपरामर्शिनः कुमार्गगामिनो भवन्ति । अन्तर्हितं ऋतचित् सृष्टिहितमभिरक्षति सर्वथा ।'

'यद्येवं, गुरुदेव ! तर्हि शक्यते किमपि कर्तुं जगद्धिताय ।'

'अवश्यमेव, वत्स ! दैवयोगात् त्वं तात्त्विकतन्तुग्राही संवृत्तोऽसि । गच्छता कालेन यदा तन्तुं तत् दृढीकरिष्यसि तदाऽऽत्महितचिकीर्षवः जनास्त्वामभिमुखं तथैवाभिवर्तिष्यन्ते यथा किल जनमेजयाभिमन्त्रिता नागास्तदीयं नागयज्ञम् । परं यावन्नागा आत्मविनाशायाभिद्रुताः तावज्जनास्त्वात्मरक्षणाय त्वामुपागमिष्यन्ति प्रथमे कल्पेऽजानन्त एव क्व ते जिगमिषव इति । एतन्निमित्तं ते यात्रां विधास्यन्ति स्वदेशादपि देशान्तरादपि, पादेनापि वायुयानेनापि । निरतिशय-

सौख्यमयं जीवनक्रमं विहाय ते कष्टमयं जीवनविधिमङ्गीकरिष्यन्ति सोत्साहमपि सोल्लासमपि । मातृनिवारिता अपि पितृवर्जिता अपि मित्रप्रतिषिद्धा अपि हिमवत्पादमागमिष्यन्ति युवानश्च युवत्यश्च। जीर्णवसना अपि निवत्स्यन्ति अर्धवसना अपि रुक्षाहारा अपि निराहारा अपि । पादपमूलेऽपि निवासं विधास्यन्ति गिरिगह्वरेऽपि । शशकशावकैः सहापि क्रीडिष्यन्ति सर्पैः सहापि । सुचिरमेकत्रापि स्थास्यन्ति प्रतिदिनमितस्ततोऽपि विचरिष्यन्ति । ध्यानमप्याचरिष्यन्ति मादकद्रव्यमपि निषेविष्यन्ते । वह्निवत् सततं जागरिष्यन्त्यपि अजगरवत् सुचिरं स्वप्स्यन्त्यपि। एकपादा अपि स्थास्यन्ति द्विपादा अपि शीर्षासना अपि । पद्मासना अपि उपवेक्ष्यन्ति सिद्धासना अपि सुखासना अपि । 'ॐ नमः शिवाय' इत्यपि जपिष्यन्ति 'ॐ नमो भगवते वासुदेवाय' इत्यपि 'तत्सवितुर्वरेण्यं……' इत्यपि । प्राणायाममभ्यस्यन्ति समन्त्रमपि अमन्त्रमपि विधिपूर्वकमपि अविधिपूर्वकमपि । वैभवविलसितं जीवनविधिमुत्सृज्योत्सृज्य ते क्लिष्टाश्च संत्रस्ताश्च समागमिष्यन्ति नानादिग्विभागेभ्यस्त्वत्सान्निध्येप्सवः। गृहानुत्स्रक्ष्यन्ति स्वदेशान् परित्यक्ष्यन्ति बन्धुवियोगं सहिष्यन्ते भोगेभ्यो विरंस्यन्ति बुभुक्षातृष्णे सहिष्यन्ते लोकापवादानुपेक्षिष्यन्ते परन्तु गुडोन्मुखं धावन्त्यः पिपीलिका इवावचेतनमनसा प्रेरिता असम्यग्ज्ञातारोऽपि त्वत्समीपमागन्तुं यतिष्यन्ते त्वां चाप्राप्यापि अपूर्वं तोषमनुभविष्यन्ति । अथ, वत्स ! यः कश्चित् संशयलेशस्त्वय्यवशिष्टः तत्सर्वं निरवशेषं विसृज्य तथा प्रयतस्व यथापेक्षितं लोककल्याणं चरितार्थतां भजेत ।'

   

'इत्युक्त्वा श्रद्धावनतस्यौमानन्दस्य शिरः समाघ्राय तदश्रुबिन्दूंश्च प्रमार्ज्य गुरुमहाराजः सरोरुहपत्रसन्निभाभ्यां पक्ष्माभ्यां शनैः शनैरक्षिपुटेऽपिधापितवान् । तच्चैतन्येन सह दिवाकरोऽपि विलयं जगाम । नारायण ! स्वयमेवावबोद्धुमर्हति भवान् कियद्विषण्णावभवावावामिति । परं कालस्तु यावदेकतो विषादं जनयति तावदन्यतः साहयत्यपि तम् । विसृष्टजीवितं गुरुमुखचन्द्रं विलोकयद्भ्यामेवावाभ्यां विषाददीर्घीकृता रजनी यापिता । प्रभातायां रजन्यां कालचक्रस्यापरिहार्यतां विचिन्त्य गुरुमहाराजादेशं उररीकृत्य चावाभ्यां खनित्रमादाय समाधिभूमिरेषोत्खाता गुरुमहाराजश्च तदभ्यन्तरे समाहितः । तेनैव साकमात्मनिमज्जनं कृतमोमानन्देन । यथा ह्यहिर्निर्ल्वयनीं वल्मीकाग्रे विसृज्यानासक्तो व्रजत्यन्यत्र तथैवोमानन्द आश्रमभरं मय्यारोप्य तस्मिन्नेव दिने निर्झरिण्या एतस्यास्तीरमवलम्ब्योपरिष्टात् क्वचित् प्राव्रजत् । नारायण ! गच्छता तेन सङ्केतमपि न

दत्तं क्वासौ स्थास्यतीति। पञ्चविंशतिवर्षाण्यतिगतान्यतः प्रस्थितस्य तस्य। एतदभ्यन्तरे तद्वार्तापि काचिन्न लब्धा। प्रयाणकाले स्मरामि निर्लिप्तं गच्छतस्तस्य प्रलम्बकेशस्योन्नतभालस्य स्फुटनासाग्रस्य मुञ्जरश्मिमात्रपिनद्धकटिदेशस्योन्नीताङ्घ्रियुगलस्य। निर्झरिण्यास्तीरे लतागुल्मो योऽसौ दृश्यते तत्पृष्ठदेश एव निलीयमानो दृष्टोऽसौ मयाऽन्ततोगत्वा। तदनन्तरं तु शिलोच्चयशिखरेऽप्येतस्मिन्नारूढोऽभूम तद्दिदृक्षया, परं निष्फलमेव। तिरस्करिण्याच्छन्न इव सर्वथा विलुप्तोऽसौ। क्वासौ गतःस्यात् कथं च भवेत्सम्प्रतीति किञ्चिदपि न जानाम्यहम्। काले काले यदा बलवत्स्मृतिपथमायात्यसौ तदा तल्लतागुल्मसन्निधौ गत्वा प्रयाणकालिकं तत्स्वरूपं मनस्युपन्यस्य किमपि विनोदयाम्यात्मानम्। एवमात्मविडम्वनामात्रमवशिष्यते मयि तदीयमि' त्येतदवददसौ महात्मा किमप्युद्विग्नमानसः।

'महात्मन् ! ब्रवीतु तावद् भवान् निर्झरिण्यास्तीरेणैव गतोऽसौ किम् ?' इत्यपृच्छमहं सौत्सुक्यम्।

'आम्। तीरेणैव गतः सः, नारायण !'

'अप्यसावुपरिष्टाद् गतः क्वचित् ?'

'नारायण ! उपरिष्टादेव गतः। परं क्व गत इति किञ्चिदपि न जानामि।'

'किं स प्रलम्बकेश आसीत् ?'

'नारायण ! आदौ त्वसौ मुण्डितशिरा एवासीत्, परं निवर्तनकाले प्रलम्बमूर्धजः संवृत्तः।'

'महात्मन् ! एतदपि ब्रवीतु भवान् अप्यसावासीदुन्नतोत्तमाङ्ग उन्नतनासाग्रो नितरां गौरवर्णो देदीप्यमानभालश्चे'ति।

'एवमेवासीन्नारायण !'

'तर्हि, नरेन्द्र ! मन्येऽहं यो महात्मा तस्मिन् दिने गुहायां दृष्टः सोऽसावेव। असौ मदीय ओमानन्द एवेति सम्प्रति दृढं विश्वसिम्यहम्।'

'बन्धुवर ! अप्येवम् ?'

'एवमेव, नरेन्द्र ! एतस्मादेव कारणाद् दृष्ट्वा मां स्मितानन आसीदसौ। विस्मृतिवशाद् यावदहं दर्शं दर्शं तं भ्रमायित आसं तावदसौ मन्दं मन्दमुपहसन्निवासीन्मयि।'

'नारायण ! अप्येतादृशो महात्मा कश्चिद् दृष्टो भवद्भ्यां निर्झरिण्यास्तीरे ?' इति महात्मनि साश्चर्यं पृष्टवति प्रत्यवदन्नरेन्द्रः :—

'महात्मन् ! दृष्टः । गुहायां स्थित आसीदसौ । स च तद्विध एवासीद् यद्विधो भवदीयो ब्रह्मचारी ।'

'मदीयश्चोमानन्दः । नरेन्द्र ! आगच्छ । गत्वा मेलिष्यामि तेन सह । तमसि स्थितः कृष्णायत इवासौ । सम्प्रत्यवगतं स्वप्नकारणम् । प्रत्यक्षतस्त्वसौ मूक इवासीत् स्थितः परन्तु परोक्षेणैतावन्मात्रं स्वप्नायितं तेन यथा स्वापमपि मे दुर्लभं जातम् । पश्य तावत् कौतुकप्रियत्वं तस्य ! अद्यैव चलिष्यामि द्रक्ष्यामि च कथं नोन्मीलयत्यात्मानमसौ । अथागच्छ । सत्वरं प्रतिष्ठाव तद्गुहाभिमुखम् ।'

'नारायण ! कास्ति त्वरा ?'

'महात्मन् ! क्षन्तव्योऽहं सम्प्रति । प्रस्थानमाप्रष्टुकामोऽस्मि । यत्सत्यं भवत्प्रसादादेव मित्रलाभः सञ्जातो मे एषः ।'

'नारायण ! अत्रापि गुरुमहाराजेनैव कारणेन भवितव्यम् । यत्किञ्चिदपि घटतेऽत्र तत्तु तस्यैव प्रेरणया । अहमपि बलवद् दिदृक्षुरस्मि तस्य परन्तु गुरुमहाराजस्याज्ञां विनाऽऽश्रमपदोऽयं नास्ति कथमपि हातव्यो मया । असावेव मदीयमपि मेलनं कारयिष्यति । गच्छतां भवन्तौ पुनरागमनाय । शिवाः सन्तु वां पन्थानः ।'

  

एवं महात्मानमापृच्छ्य सविनयं च प्रणम्याश्रमपदात् प्रस्थितावावाम् । एतावता कालेन भगवान् मरीचिमाली गगनमारुह्योद्दीप्ततरः संवृत्तः । नैशान्धकारलेशमप्युद्वीज्यापाकुर्वन् तन्मरीचयः । ओमानन्दस्यैव सन्देशं मुखरीकुर्वन्तीव समग्रमपि गिरिप्रदेशमध्वनयन्निर्झरिणी । सामोदमुड्डीयमानाः खगाः तमेव सन्देशं प्रासारयन्निव समन्तात् । शीतलमन्दपवनोद्वीजिताः सलताः पादपाः शिरश्चालनपूर्वकं प्रमाणीचक्रुरिव तमेव । समाहिताशेषजीवनसमस्याविवावामनत्यायासेन निखिलमप्यवरोहमार्गमतिक्रम्यागच्छाव लतागुल्मप्रसूनसुरभितां कलकलनिनादितां मन्दपवनोद्वीजितां निर्झरिणीवीथिकाम् ।

'पश्यतु भवांस्तावत् कियद्रुचिर एष पन्थाः' इत्यवदत् सहसा मन्त्रमुग्ध इव नरेन्द्रः । 'एष तु यत्सत्यं कलावीथिरिव प्रतिभाति, याथार्थ्यं भजमानेवोत्तमकलाकारकल्पना ।'

'अवितथमुक्तं त्वया, नरेन्द्र ! जगदपि दिव्यकलाकारस्य मूर्तिमती कल्पनैव । यावद् याथार्थ्यं भजमाना कल्पना सृष्टिं सूते तावत् काल्पनिकत्वेन

विगलिता सृष्टिः कलामाकारयति। वास्तविकः कलाकारस्तु स यो न केवलमिन्द्रियसंवेद्यमात्रमपितु वस्तुजातमेव कलादृष्टया पश्यति। मन्ये वीथिरेषा तद्विधस्यैव कलाकारस्य सन्निधौ नेष्यत्यावां यः खलु सृष्टिचक्रनाभौ समाधायात्मानं समाधिचैतन्यतूलिकया वस्तुजातं पुनराकारयितुं प्रयतते।'

'बन्धुवर ! यद्येवं तर्हि महर्षयोऽपि कलाकारकोटिभाजिनो मन्तव्याः।'

'असंशयमेव। पश्य तावद् वेदेषु 'कविरि'ति निर्दिष्टः ऋषिः, 'काव्यमि'ति सङ्केतितमार्षदर्शनम्, 'कविरि'त्यभिहितश्च सर्वद्रष्टा परमेश्वरः। अपरञ्चासौ परमेश्वरः क्वचित् सङ्गीतज्ञ इवोपकल्पितः, क्वचिन्नर्तक इव, क्वचिच्च चित्रकार इव। नरेन्द्र ! अलं चिन्तया, त्वदभ्यस्ता कलापीश्वराव-बोधाय कल्पते।'

'आम्। सम्प्रत्यनुमातुं शक्यते मया ईश्वरावबोधे ऋषिभिः सह कलाकाराणां कियद् योगदानमिति। पश्यतु तावद् भवानेव देवालयेषु देवप्रकल्पनायां मूर्तिकारैश्चित्रकारैश्च कियती कला विनियोजिता।'

'एतत्सर्वं मनसि निधायैव ब्रवीमि, नरेन्द्र ! ऋषिभिश्चेदीश्वरावबोधो जनितः तर्हि कलाकारैरसावीश्वरो मूर्तिमान् कृतः। यद्यवबोधं विना मूर्तिमत्ता न सम्भाव्यते तर्हि मूर्तिमत्तां विनाऽवबोधः पूर्णतां न भजते। उभयोरेवान्योन्याश्रितत्वाद् ऋषिभिस्तु कलान्वितैर्भवितव्यं कलाकारैश्चार्षज्ञानानुप्राणितैः।'

'बन्धुवर ! व्यवस्थैषा प्रकारान्तरेण परामृष्टा सती आर्षज्ञानवन्तमोमानन्दं कलाप्रियं प्रमाणीकरोति।'

'तत् त्ववितथमेव, नरेन्द्र ! अपि न पश्यसि स्वत एव प्रमाणीक्रियमाणमेतत् ? तस्मिन् दिने दृष्ट्वा मां किमसौ योगी नाशकद्वक्तुं तत्क्षणमेव 'अहं त्वोमानन्द एव ?' यद्यासीद्वाक्संयमी, तदापि सङ्केतेनैव स्पष्टीकर्तुमार्हदेतत्। एवं कुर्वति तस्मिन्, विभ्रमो लब्धावसरो न स्यात्। किमपि सङ्केतितमपि चेत् तेन, तर्हि रहस्यावृतेन स्मितेन। स्मितं नाम मनुजस्याद्या कलात्मिकाभिव्यक्तिः। तदनन्तरं स्वरूपोन्मीलनाय वृतस्तेन स्वप्नो यस्तावत् ततोऽपि गूढतरः संवृत्तः। नरेन्द्र ! सत्यं ब्रवीमि यदेतद्दिवसीयानां मम स्वप्नानां कारणमसावेव। चिक्रीडिषतीवासौ मया सह सम्प्रति। उपगम्य दृढमुपालप्स्ये तम्। नरेन्द्र ! पश्य तावत् को नु खल्वेष पदे पदे स्खलन्निवावरोहति शिलोच्चयादेतस्मात्। कश्चिद् वैदेशिको युवा प्रतीयते। मा खलु पथभ्रष्टः स्यादेषः।'

'कोऽपि स्यात् । किमावाभ्याम् ?'

'न खल्वेवम् । पूर्वपरिचित इव प्रतिभाति । अये, नीरूपः खल्वेषः । न जाने कुतः समापतितः ?'

'भ्रातः ! इत एवागच्छत्यसौ ।'

'आगच्छतु । ······अये, नीरूप ! कुतस्त्वम् ?

'श्रीमन् ! महत्कष्टमापतितं मयि । नितरां विषण्णोऽस्मि ।'

'नीरूप ! कथय तावत्, किं तत् ?'

'श्रीमन् ! एका कुमारिका सखी निवसति स्म मया सार्धम् ।'

'कुत्र ? तस्यामेव गुहायाम् ?' इत्यपृच्छत् साश्चर्यं नरेन्द्रः ।

'आम् । तस्यामेव गुहायाम् ।'

'नीरूप ! त्वं तु दिने तस्मिन् मां न्यवेदय एकाक्येव निवससि तत्रेति । तर्हीयं त्वत्सखी कुत आपतिता ?'

'श्रीमन् ! क्षन्तव्योऽहम् । कुमारिकासख्यस्त्वस्मदङ्गभूताः । तास्तु वयं पृथग्गणयाम एव न । सा तु मया सह तस्यां गुहायां नैकवर्षाणि न्यवसत् ।'

'किमभवत् तस्यास्तर्हि ?'

'श्रीमन् ! न जाने किमभवत् । अन्यस्मिन् दिवसे जर्मनदेशीयो युवक-युवतिसङ्घः कश्चित् तेनैव मार्गेणागत इतोमुखः । दृष्ट्वा तान् मत्समक्षमेव किञ्चिदुद्विग्नमना अभवत् सा । आलक्ष्याप्येतत् स्नानार्थमुपगङ्गं निश्शङ्कम-गच्छमहम् । श्रीमन् ! शङ्काया नासीदवसरः कश्चित् । नैकवर्षाणि न्यवसत् सा मया सार्धं मज्जीवितसर्वस्वभूता । परन्तु स्नानात् प्रतिनिवृत्तोऽहं नापश्यं तां गुहायाम् । महती शङ्का मनसि जाता, परन्तु तत्सममेवैतदप्युपजातमितस्ततो गता भवेत् क्वचिदिति । एवं सोद्वेगं प्रतीक्षमाणेन मया होराद्वयमतिगमितं तत्रैव । तथापि यदा सा न प्रतिनिवृत्ता तदा गुहां विहायेतस्ततोऽन्वेषणमारब्धम् । हन्त, तथापि न लब्धा सा । अथ मनसि व्यवसितं तेनैव जर्मनदेशीयेन सङ्घेन सार्धं गता भवेदिति । सङ्घमेव तमन्विषामि सम्प्रति । अभिनवानुभूत्याकांक्षिणो भवन्त्येतद्विधाः सङ्घाः । गतं गतं मार्गं विहाय चलन्त्येते । अथ भ्रमामि शिखराच्छिखरान्तरम्, उपत्यकाया उपत्यकान्तरम्, वनषण्डाच्च वनषण्डान्तरम् । परन्त्वेतत्पर्यन्तं वार्तापि काचिन्न श्रुता तस्याः । न जाने कुत्र गता सा । तथापि नास्मि हताशोऽहम् । यतिष्ये, अन्विष्यामि च तां यथाकथञ्चिदपि । सा हि जीवितसर्वस्वं मम । तत्साहचर्येणैवासीन्मदीया गुहा स्वर्गायिता । तया विरहिता

सा सम्प्रति श्मशानभूमिरिव भयावहा संवृत्ता। यावत् सखीं तां न लप्स्ये तावद् गुहां न प्रतिनिवर्तिष्ये।'

'नितरां विरहसन्तप्तोऽयं वराकः' इत्यमन्त्रयन्मत्कर्णे नरेन्द्रः।

'किं करोतु सः? जीवितसर्वस्वमेवापहृतमस्य' इति मयाऽसौ मन्दं मन्दं प्रत्युक्तः। परन्त्वेतस्मिन्नेव क्षणे मम मनस्यागतं नीरूपाय च निवेदितमेतत्—

'नीरूप! यस्मिन् दिवसे तव कुमारिका सखी त्वत्तोऽपगता तत्सन्ध्यायामास्वावां पुण्यनीलकण्ठधाम्नि। तत्र तु नैके युवकसङ्घा दृष्टा इतस्ततो विचरन्तः। अपरेद्युर्यवत् प्रतिनिवर्तमानावास्व ततस्तावत् पथि मिलितो जर्मनदेशीय एको युवा। वार्ताक्रमेण ज्ञातं यन्नीलकण्ठधामन्यासीदसौ तदानीमथ च ततोऽप्यूर्ध्वतरं यत्र खलु तद्देशीया बहवो युवानो गुहासु न्यवसन्। त्वत्सख्यपि तेनैव सङ्घेन सार्धं गता भवेत्। अथ गच्छ पुण्यनीलकण्ठधामाभिमुखम्। भगवान् अर्धनारीश्वरः कल्याणं विधास्यति ते।'

श्रुत्वा मद्वचनं प्रहृष्टमना अभवन्नीरूपः। शोकाक्रान्ते तच्चक्षुषी पातयित्वाऽश्रुबिन्दून् स्फुटतारकेऽभवताम्। ॐ नमोऽर्धनारीश्वराय, ॐ नमोऽर्धनारीश्वराय' इति जपन् उद्घाटितरहस्यकपाट इवासावाश्वस्तो जातः। 'श्रीमन्! कृतज्ञोऽस्मि। प्रस्थानायानुजानातु भवानि'ति साञ्जलिमापृच्छ्य गुल्मान्तराले तिरोहितोऽसौ।

  

अथ निर्झरिणीतीरेण व्रजद्भ्यामावाभ्यामनतिदीर्घेण कालेन गुहापरिवेशवर्ती शिलोच्चयो दृष्टः। पवनोऽत्र मन्दतरो जातः। सूर्यरश्मयः तीक्ष्णत्वमुत्ससृजुः। निर्झरिणीस्वनो माधुर्यं भेजे। गन्धवहःसुतरां चरितार्थोऽभूत्। पक्षिणां कलरवो लयवत्तरः सञ्जातः।

'ननूपगम्य किं कथनीयः स्यान्महात्मा?' इत्यवोचद्विमृशन्निव नरेन्द्रः।

'यदा मम प्राक्तनः सखैवासौ तदा विचारणया किम्? यत्किञ्चिदपि प्रक्ष्यावः स्वच्छन्दतः। यः कोऽपि भवेदसौ सम्प्रति, मत्कृते तु सोऽसावेवौमानन्दः। विद्यार्थिजीवनं स्मारयिष्यामि तम्, उपालप्स्ये च किमर्थमसौ तस्मिन् दिवसे श्रमं नापानुददिति। विभ्रमावरणमपसारितमभविष्यच्चेत् तेन तर्हि नारायणाश्रमगमनस्य तत्रावस्थानस्य तन्माध्यमेन रहस्योद्घाटनस्य चावश्यकतापि नाभविष्यत्। पश्य तावत् कियत्कष्टकरः संवृत्त ओमानन्दः।

आत्मज्ञापनविधिरेव तस्य वैचित्र्यावहः । यदा तु सन्निकृष्ट आसं साक्षात् तदा चक्षुषी निमील्यैतावन्मात्रमनभिज्ञ उदासीनो निर्लिप्तश्च संवृत्तोऽसौ यथा खल्वसद्भूत एवासमहं निस्सत्त्वः परिचयानर्होऽप्रत्यभिज्ञेयश्च । यद्यहमेकान्तत एतादृश एवासम्, तर्हि स्वप्नस्यैव काऽऽसीदावश्यकता ? पश्य तावत् तच्चपलताम् । आत्मसंज्ञापनाय स्वप्नविधिस्तेनाश्रितो येन खलु निद्रापहृता, मनस्तापं जनितम्, स्वास्थ्यमपचितम्, कार्यक्रमश्च विघटितः । को नु खलु लाभः स्यात् तस्यैतेन नाट्यप्रयोगेण ? आगच्छ, एतदपि प्रक्ष्यामि तं श्रोष्यावश्च किमसौ प्रतिवदतीति ।'

'बन्धुवर ! अप्यसौ वक्ष्यति किमपि ? मन्ये, भवानस्ति तस्य प्राक्तनं मित्रम् । किं स एतस्मादेव कारणादात्मसङ्कल्पं भङ्क्ष्यति ।'

'कीदृशं सङ्कल्पं, नरेन्द्र !'

'मौनस्य, बन्धुवर !'

'आम् । अवगतम् । एकान्तमौनव्रती स सम्प्रति । स तु वक्ष्यत्येव न । का वार्ता तर्हि प्रश्नोत्तरस्य ? मौनव्रतावलम्ब्यपि न स्याच्चेदसौ, तदापि प्रश्नेनैतेन किम् ? कः खलु लाभान्वितो भवितैतेन ? निरर्थकं कष्टमापत्स्यते स महात्मा । तदुत्पीडनेन को लाभः स्यादस्मदीयः ? स तु महात्मैव संवृत्तः । स्वेच्छया स कञ्चिज्जनमभिज्ञातुमर्हति कञ्चिच्च न । अप्रतिरोधनीयं खलु तत्स्वाराज्यम् ।'

'बन्धुवर ! स्थान एव चिन्तितं भवता । स्वेच्छास्वीकृतकष्टमयजीवनक्रमा महात्मानो भूयोऽपि कष्टेषु नापादनीयाः । परं कौतुकनिवृत्त्यर्थमेतत्तु पृष्टमेव स्यात् — अप्येतस्मिन् भयावहे भूखण्डेऽहर्निशं निवसन्नसौ कदाचिद् बिभेति न वा । नितरां जनशून्यो ह्ययमरण्यभागः । पशवस्तावदत्र कियद्भयङ्करा इति तु दृष्टमेवावाभ्यां तस्यां रात्रौ । अद्यापि रोमाञ्चितोऽस्मि तत्परामृश्य । पुनश्च प्रेतबाधितापि स्यादेषा स्थली । कालकवलिताः सहस्रशोऽपि सत्त्वा विचरितुमर्हन्त्यत्र । तेऽपि बाधयेरन्नेकाकिनं जनम् । वन्यपशोरपि भयङ्करान् मन्येऽहं तान् । वन्यपशूनां तु वृक्ष आरुह्य जलेऽवगाह्य शस्त्रमवलम्ब्य वा प्रतीकारः स्यात् । यत्सत्यमेतद्विधाः केचित् सत्त्वा भवन्तु, न वा भवन्तु, परमेतद्विषयिणी चर्चा त्वस्मद्देशे गृहे गृहे भवत्येव । स्मरामि खलु सान्ध्यवेलायां वृद्धजनैः कैश्चित् काले काले प्रेतकथास्वाख्यातासु पितामहक्रोडस्थोऽप्यहं भृशं प्रकम्पितोऽभूम । अप्योमानन्दस्य कर्णपथं नायाता स्यादेतादृशी कथा कदाचित् ? एवं सति, कथं नु खलु निद्रायतेऽसावत्र ? अहं तु प्रतिश्रुतलक्षरूप्यकपुरस्कारोऽप्यत्रैकाकी

रात्रिपर्यन्तमपि स्थातुं न शक्नोमि । न स्युर्मानुषा पशुभिर्मारणायोपलब्धा अत्राद्य, परं प्रागैतिह्ये काले तु सहस्रशोऽप्यादिमानवा व्याघ्रसिंहभल्लूकादिभिः कवलीकृता भवेयुरेव ।'

'नरेन्द्र ! अकाल एव बिभीत इव लक्ष्यसे त्वम् । स्युर्नामैतादृशाः सत्त्वास्तस्मिन् प्राक्तने युगे, परमेतावता कालेन तु तैर्जर्जरितैर्मृतैश्च भवितव्यम् ।'

'बन्धुवर ! अलं तावदेतेन विश्वासेन । अशरीरिणस्ते कथं जर्तुमर्हन्ति मृताश्च पुनरपि मर्तुम् ? चिरयुवानोऽप्येते सत्त्वा महात्मानमेनं कथं न बाधन्ते ? तैः सह त्वेतेन समयः कृतः स्यात् कश्चिद् यथैनं ते परिवर्जयेयुः । अथवैतेन मन्त्रज्ञेन भवितव्यं यथा त इच्छन्तोऽप्येनं बाधितुं न शक्नुयुः । ननु यद्यसावेतद्विधं मन्त्रं कमपि वेत्ति तर्हि प्रार्थितः स्यान्मह्यमपि प्रदातुम् । बन्धुवर ! महत्कल्याणं भविष्यति जनानामेतेन । मन्त्रमादाय प्रेतबाधितान् जनान् बाधानिर्मुक्तान् करिष्येऽहम् । एवमेव सर्पदंशोपचारमन्त्रविदाप्येतेन भवितव्यम् । सर्पपर्याकुले भूभागेऽन्यथासौ कथं प्रतिवसेत् ? अनेनापि मन्त्रेण जनकल्याणं विधातुं शक्यते । अपरं च यदहमेतस्मान्महात्मन आदातुमिच्छामि तत्तु स्वास्थ्यमधिकरोति । बन्धुवर ! पश्यतु तावद् भवानेव कियान् पुष्टाङ्गोऽयं जनः । रूक्षपट्टिकापि न लभ्यास्यैतस्मिन् जनशून्ये स्थले, का कथा पुनर्दुग्धस्य घृतस्य नवनीतस्य वा । तथापि कियद्रक्ताभकपोलः कृष्णाभकेशश्चायं महात्मा ! अथ भोजनव्यतिरिक्तः कोऽपि रहस्यविशेषः स्यादेतस्य स्वास्थ्यस्य । एतादृशाः पुष्टाङ्गा जनास्तु लोकेष्वपि न दृश्यन्ते । किं नु खल्वसौ खादति, किं पिबति, कथं वा निवसति ? बन्धुवर ! अनुमिमे तेन महताऽऽसनप्राणायामविदा भवितव्यम् । भवता प्रार्थितोऽसौ विषय एतस्मिन् मां प्रतिबोधयितुमर्हति ।'

'नरेन्द्र ! पूर्वं तावन्मया नावगतं यत् चित्रकलया सह योगविद्यायामप्येतावाननुरक्तोऽसि त्वम् । मन्त्रविषयिकी त्वदीया जिज्ञासा तु मनसि मे कौतुकामिश्रितं मोदमेव जनयति । अपि त्वं महात्मानमेनमितस्ततो भ्रमन्तैर्नागपालैः तोलयितुमिच्छसि ? सर्पदंशोपचारमन्त्रस्तु रूप्यकपञ्चव्ययपूर्वकं यस्मात्कस्माच्चिन्नागपालादेवादातुं शक्यते । प्रेतबाधाशमनकारिणो मन्त्रांश्च ग्रामे ग्रामे प्रतिवसद्भ्यो मन्त्रविद्भ्यो निर्मूल्यकमेवावाप्तुमर्हसि । एतदर्थमेष दुर्लभदर्शनो महात्मा क्लेशितः स्यादिति तावन्मह्यं मनागपि न रोचते । नरेन्द्र ! बालभावस्त्वामिदानीमपि न मुञ्चति । अहमपि त्वादृगिव प्रष्टुमना अस्मि परं न प्रेतबाधानिवारकमुपायमधिकृत्य प्रत्युत समाजद्रोहिणां जनानां प्रकृतिमधिकृत्य । प्रेतास्तु भवन्ति वा, न वा भवन्तीत्यस्ति सन्देहास्पदम् । सन्तोऽपि ते बाधकत्वेन

सह साधका अपि श्रूयन्ते । सज्जनाः खलु मृता अपि सज्जना एव स्युः । एवमेव दुष्प्रेतैर्जीवनकालेऽपि दुर्जनैरेव भवितव्यम् । अथ प्रेतबाधानिवारणायापि दौर्जन्यनिवारणं साधकत्वेन ग्राह्यम् । दुर्जनास्तावत् कांश्चिद् भाण्डहीनान् कुर्वन्ति कांश्चिच्च द्रव्यहीनान्, कांश्चित् कुलिशेन हन्ति कांश्चिच्च वाचा, क्वचित् स्वयमेव युध्यन्ते क्वचिच्च प्रतिवेशिनावन्योन्यं योधयन्ति, क्वचिच्चौरसङ्घं संयोज्य जनान् रात्रौ लुण्ठन्ति क्वचिच्च राजनैतिकदलमाश्रित्य दिवापि रात्रावपि, क्वचिद्राजसेवां प्रविश्य राजद्रव्यं मुषन्ति क्वचिच्च कर्मिषु बुद्धिभेदमुत्पाद्य राज्यमेव विघटयन्ति, क्वचिद् धर्मकञ्चुकं प्रविश्य देवप्रतिमायाः समक्षं तन्मिषेण श्रद्धावतो जनान् लुण्ठन्ति क्वचिच्चान्धविश्वासरज्ज्वाबद्धैर्धर्मभीरुजनैर्नरसंहारं कारयन्ति, अशिक्षिताः सन्तस्ते लगुडप्रहारेण जनविशेषान् हन्ति शिक्षिताश्च सन्तोऽन्यास्त्रप्रयोगेण जनसमूहं नाशयन्ति, शत्रुतामापद्य किमपि हरन्ति मित्रतां च नाटयित्वा सर्वस्वम्; भिषजो भूत्वौषधेन मारयन्ति शिक्षका भूत्वा शिक्षया, रक्षका भूत्वा रक्षणेन, धर्मोपदेष्टारो भूत्वा धर्मोपदेशेन, व्यापारिणो भूत्वा व्यवहारेण, राज्यकर्मचारिणो भूत्वा राजचक्रेण, आर्थिकसहयोगमिषेणार्थशक्त्या, राजनैतिकसहयोगमिषेण राजनीतिशक्त्या, सांस्कृतिक सहयोगमिषेणसांस्कृतिकशक्त्या; सहयोगं दत्वा सहयोगिनः स्वातन्त्र्यमपहरन्ति, ऋणं दत्वाऽधमर्णमाचाराद् भ्रंशयन्ति, कौशलं दत्वाऽकुशलीकुर्वन्ति; नृत्यगीतैर्जनान् सम्मोहयन्ति सम्मुग्धांश्च राजनीतिरज्जुना निगृह्य मर्कटवन्नर्तयन्ति । को नु खलूपायः स्यादेतेषां मायाविनां निग्रहणाय ? अद्यपर्यन्तं यो य उपायः प्रयुक्तः स स तैः परावर्त्यानर्थान्तरायैवोपकल्पितः । यथा यथा निग्रहोपायः सूक्ष्मीक्रियते तथा तथा प्रतिकारबुद्धिस्तैः सूक्ष्मतरत्वं नीयते । अथ यथा यथा भौतिकीं समृद्धिमर्जयति लोकस्तथा तथा तल्लुण्ठनविधिरपि शक्तिमत्तरत्वं भजते । एतस्यां रामरावण्यां रावणोऽनुदिनं रावणतरो भवति सुखशान्तिसीता च शोकपर्याकुलतरा । अथ पप्रच्छुरस्येनं महात्मानमप्यस्ति कोऽप्युपचार एतस्याश्चैतन्यव्याधेरिति । जडत्वपराङ्मुखो ह्ययं महात्मा विशुद्धचैतन्यसाधकोऽस्ति सम्प्रति । गुरुमहाराजेनाप्यसावेतन्निमित्तमेवोपदिष्टो निभृतसाधनायां च नियुक्तः । मया तु जिज्ञास्यतेऽप्येतेन महात्मना पञ्चविंशतिवर्षैरेतैर्लोकचैतन्यपरिष्कारायोपायः कोऽप्यन्विष्टो न वेति । सर्व एव प्रश्नान्तरा एतस्मिन्नेव समाहिताः ।'

'बन्धुवर ! भवतु नामैवमेव । परमेको मदीयः प्रश्नस्तु प्रष्टव्योऽस्ति पृथगेव । अपि महात्मनैतेन पञ्चविंशतिवर्षाण्यत्रैतस्मिन् दुर्गमे गिरिगह्वरे दिवानिशं निवसता कदाचिदादिमानवो दृष्टो न वेति ।'

'अलमलमत्युच्चैर्भाषितेन । अपि नाभिजानासि गुहासमीपमागतौ स्व इति ।'

'भ्रातृवर ! क्षन्तव्योऽहम् । आदिमानवचिन्तानिमग्नेन मया तावन्नाहि-तमुपगुहमागतौ स्व इति । कदाचिदस्मच्छब्दो महात्मनः श्रुतिपथं नागतो भवेत् । न जाने किं मंस्यतेऽवगतार्थः ? अहं तु भीतोऽस्मि । भवानेव चलत्वग्रे । न प्रसरतो मत्पादौ पुरस्तात् । महात्मैष काले काले मया तूपहसितोऽपि । एतादृशा महात्मानस्तावत् सर्वमेव जानन्ति परोक्षमपि, अपसृतमपि । अहं त्वत्रैव तिष्ठामि । एकाक्येव गच्छतु भवान् ।'

'अलं भयेन । निरर्थकमेव भीतोऽसि । आगच्छ, सममेव मेलिष्यावः । चिरमित्रं ह्यसौ मे । पञ्चत्रिंशद्वर्षाण्यतिगतानि तेन सह मिलितस्य मम । कियद्धृष्टमना भवितासावद्य दृष्ट्वा माम् ! आत्मभूतो ह्यसौ मे । तद्दिवसीयं मेलनं तावत् कादाचित्कमेवासीत् । स मामभ्यजानात् परमहमेव तदनभिज्ञोऽभवम् । एहि, सममेव स्नास्यावः सौहार्दसरिति ।'

एवं मन्त्रयन् साह्लादं सरोमाञ्चं च गुहामुखमुपसृत्य यावदधोमुखोऽव-लोकयामि बलवदुत्प्रेक्षे च यत् कश्चित् तच्छिष्यो मां सद्य एवाकारयिता, महात्मा वा ज्ञातागमनः प्रवेशाय सङ्केतयिता, तावत् केषुचित् क्षणेष्वतिगतेष्वपि न तु किञ्चिदाह्वानं श्रुतं न च कश्चित् सङ्केत एव लब्धः ।

'किं नु खल्विदम् ? तस्मिन् दिने तु सद्य एवाहूतावास्व, परमिद कोऽप्याह्वानशब्दो न श्रूयते । मन्ये, एकाक्येव सन्निहितो महात्मा सम्प्रति । न स्यात् तत्सन्निधौ कश्चिच्छिष्यः । समाधिस्थोऽपि भवितुमर्हति सः । परं नास्त्येष तत्समाधिकालः । तस्मिन् दिनेऽप्येतावतैव कालेनागतावास्व महात्मानं च व्युत्थितमेवापश्याव । यद्वा तद्वा भवतु, गुहां प्रविशाव ।'

इति निश्चित्य पूर्ववद् यावन्नरेन्द्रानुगतो गुहायामवातरमभ्यन्तरतः सङ्केतं प्रतीच्छन्, तावदनुक्षणं तमस्तूपाचीयत परं न तु किञ्चिच्छ्रुतं नैव किञ्चिद् दृष्टम् । मौनव्रती महात्मा कथं खलु ब्रूयात् तिमिराच्छन्नश्च कथमेकपद दृष्टिगतो भवेदित्याश्वास्यात्मानं गुहाभ्यन्तरे निर्निमेषदृष्ट्यावलोकयन्नतिष्ठं परं न तु पुरस्तान्, न च पश्चात्, नैव पार्श्वयोः क्वाप्यपश्यं महात्मानं अन्वीक्षमाणाशेषगुहाभोगो नरेन्द्रोऽपि चकितो मामवैक्षत । एतावता कालेनाभि-भूततिमिरा दृष्टिर्वैशद्यमवाप । परं तदानीमपि न दृष्टो महात्मा क्वचित् ।

'तेन त्वत्रैव भवितव्यम् । किमर्थं नावलोक्यतेऽसावि'त्यपचितदृष्टिविश्वासो यदा पोट्टलिकायाश्चौरवर्तिकामादाय प्राज्वालयं तदा तदधिष्ठिते पीठेऽपश्यमु-लखण्डमेकं पूर्वपरिचिताक्षरैर्गैरिकाङ्कितम्—

'यदेव ॐ तदेव सत् । ॐ तत्सदिति ध्यायेदात्मानम् ।'

•—०—•